सौरदिनभागेन फलस्याधिमासावयवदिनाद्यधिशेषेऽधिकत्वात् कथं तत्त्याग इति वाच्यम् । अधिकस्याशुद्धत्वेनापि त्यागसंभवात् । तस्माच्चान्द्राहर्गणस्य वास्तवत्वं युक्तमित्याहुस्तन्न विजात्योर्योगे पृथक् स्थितिरिति मूलकारेण बीजे उक्तस्य जलाञ्जलिदानापत्तेः । वास्तवसौराणामभावेनानुपातासंभवात् । अहर्गणस्य शुद्धत्वेऽप्यधिकत्वेनाधिशेषस्याशुद्धत्वापत्त्या तत्साधितसूर्यचन्द्रप्रकारादौ बह्वन्तरत्वेनानर्थक्यापत्तेश्च ॥ ३ ॥

इदानीं ग्रहानयनमाह ।

द्युचरचक्रहतो दिनसंचयः
कहहृतो भगणादि फलं ग्रहः ।
दशशिरःपुरि मध्यमभास्करे
क्षितिजसंनिधिगे सति मध्यमः ॥४॥

**वा. भा.**—अहर्गणे भगणगुणे कहहृते मध्यमो ग्रहो भवति । स च लङ्कायां मध्यमे रवौ क्षितिजासन्ने कदाचिदूर्ध्वस्थे कदाचिदधःस्थिते भवतीति ज्ञेयम् । तत्कारणं गोले कथितं व्याख्यातं च ॥ ४ ॥

**वा.वा.**—इदानीं ग्रहानयनमाह । द्युचरचक्रहत इति । कल्पकुदिनैः कल्पग्रहभगणा लभ्यन्ते तदेष्टकुदिनैः किमिति ग्रहो भवति । केचिल्लङ्कायां मध्याह्नमध्यरात्रास्तमनकालेषु ग्रहगतिप्रारम्भमिच्छन्ति तन्मतनिवारणाय पूर्वक्षितिजस्य इति । अग्रे चोदयान्तरकर्म वक्ष्यति तस्मात् संनिधिगे इत्युक्तम् । देशान्तरचरसंस्कारयोर्वक्ष्यमाणत्वाल्लङ्कापूर्वक्षितिजसंनिधिगे इति । भास्वत्फलसंस्कारस्य वक्ष्यमाणत्वान्मध्यमभास्कर इत्युक्तम् ॥ ४ ॥

**मरीचिः**—अथ यदर्थमेतावान् प्रयासस्तद्ग्रहसाधनं द्रुतविलम्बितेनाह द्युचरचक्रहत इति । द्युचरपदस्योपलक्षणेन कल्पे येषां भगणा उक्तास्तद्भगणैर्गुणितोऽहर्गणः कल्परविकुदिनभक्तः फलं यद्भगणादि विकलापर्यन्तं ग्रहो भवति । यद्भगणा गुणनार्थं गृहीतास्तद्भवतीत्यर्थः । तथा

वाहर्गणः कल्पभगणगुणः कल्पसूर्यसावनभक्तः फलं कल्पाद्गतभगणाः । शेषं द्वादशगुणं हरभक्तं भगणपूरणकालाद्राशयः । पुनः शेषं त्रिंशद्गुणं हरभक्तं राशिभोगादंशाः । पुनः षष्टिगुणं हरभक्तं कलाः । पुनः षष्टिगुणं हरभक्तं विकला इत्यादिरीत्या भगणाद्यात्मको ग्रहः । देशानामनन्तत्वेनायं क्व इत्याह दशशिरःपुरीति लङ्काभूगर्भदेशे । कालोपाधीनामनन्तत्वेन कालनियमामाह मध्यमभास्कर इति । मध्यमसूर्ये क्षितिजनिकटे सति । आकाशलग्नभूवृत्तं क्षितिजम् । मध्यमसूर्योदयप्रागपरकाले तत्काले चेत्यर्थः । अस्याकाशे गोलवेधानीतस्पष्टप्रत्यक्षग्रहेण विसंवादान्मध्यम इति । आकाशेऽस्यादर्शनात् स्वतः सिद्धो विसंवादः । अत एव स्पष्टाधिकारोक्तफलसंस्कारेणास्य मध्यमस्य स्पष्टत्वमुक्तम् ।

अत्रोपपत्तिः । कल्परविसावनैः कल्पभगणतुल्यो भोगस्तदा कल्पादिगतेष्टसावनदिनैः क इति फलं कल्पादिष्टकालपर्यन्तं गतभोगस्तस्येति लक्षणया भोगे ग्रहपदं प्रयुक्तमाचार्यैः । स्वस्वकाले उपचयापचययोः सत्त्वाद् तत्स्वाभाविकानुपातेनानीतग्रहस्याकाशे विसंवादान्मध्यमत्वं लङ्काप्रथमसूर्योदयकालाद्ग्रहचारप्रवृत्तेस्तत्कालाहर्गणादीनां मध्यममानेन सत्त्वान्मध्यमसूर्योदये लङ्काभूगर्भे इत्युक्तम् । अग्रे भूगर्भगणितस्य किञ्चित्संस्कारेण भूपृष्ठगणितत्वस्य प्रतिपादनात् । अथ तत्रापि मध्यमसावनषष्टिघटिकामितमत्र नाक्षत्रघटीज्ञानं घटिकादिकमार्तमानादित्युक्तत्वात् तत्रैकदिने नक्षत्रोदयद्वयान्तरकाले तदन्तर्गते नाक्षत्रषष्टिघटिका एता गतितुल्यभचक्रावयवप्रवहवायुकृतभोगकालासुयुताः । यद्येकराशिकलाभिरुदयासवो लभ्यन्ते तदा सूर्यमध्यकलाभिः क इत्यनुपातेन प्रतिराशीनामुदयासुवैलक्षण्यात् मध्यमसावने नाक्षत्रघटीमानवैलक्षण्यम् । अस्याप्येकरूपत्वाभावादनुपातानीताहर्गणस्य मध्यमसावनमानेनाप्तत्वात् । द्वादशराशिकलास्वोः समत्वदर्शनेन सूर्यगतितुल्यासुयुतनाक्षत्रघटिकात्मकमध्यमानासन्नस्यसावनस्यैकरूपत्वादङ्गीकारेणाहर्गणस्यैतत्-

कालीनत्वात् तदुत्पन्नग्रहस्यापि एतत्कालस्य मध्यमानीतात् प्रागपरकाले नियमेन सम्भवात् । मध्यमभास्करे क्षितिजसंनिधिगे सतीत्युक्तम् ॥ ४ ॥

इदानीं ज्ञातेऽर्केऽवमशेषाच्चन्द्रमाह ।

कोट्याहतैरङ्ककृतेन्दुविश्वै-
न्यूनाहशेषे विहृते लवाद्यम् ।
रविघ्नतिथ्याढ्यमनेन युक्तो
रविर्विधुः स्याद्विधुरूनितोऽर्कः ॥५॥

**वा.भा.**—अस्योपपत्तिः । चन्द्रार्कयोरन्तरभागैर्द्वादशभिरेकैका तिथिर्भवति अतस्तिथयो द्वादशगुणास्तयोरन्तरभागा भवन्ति । ते यदि रवौ क्षिप्यन्ते तदा शशी स्यात् । यदि शशिनः शोध्यन्ते तदाऽर्कः स्यादिति युक्तमुक्तम् । किन्त्वेवं तिथ्यन्ते भवति । अथ चन्द्र औदयिकः साध्यः । तत्र तिथ्यन्तार्कोदययोर्मध्येऽवमशेषं वर्तते । तच्च सावनम् । तस्य सावनत्वं गोले प्रतिपादितम् । तच्चानुपातेन चान्द्रं कार्यम् । यदि कल्पकुदिनैः कल्पचान्द्रदिनानि लभ्यन्ते तदाऽवमशेषान्तःपातिभिः कुदिनैः किमिति । पूर्वमवमशेषस्य चान्द्रदिनानि भागहार इदानीं तानि गुणकारः । तुल्यत्वात् तयोर्गुणकभाजकयोर्नाशे कृते कुदिनानि भागहारः । फलं चन्द्रदिनात्मकं भवति । तद्द्वादशगुणितमंशात्मकं भवति । अतो द्वादशभिः कुदिनानामपवर्त्ते कृते खाभ्रबाणगिरिरामखत्रिगोशक्रविश्वमितो भागहार उत्पन्नः । तत्र लाघवार्थमाद्येषु सप्तसु स्थानेषु शून्यान्येव कृत्वा भागहारः पठितः । यतस्तथाकृते एकाऽपि विकला नान्तरं भवति । अतस्तैश्च भागैर्युतोऽर्कः शशी स्यादित्युपपन्नम् ॥ ५ ॥

**वा.वा.**—अथावमशेषज्ञाने रविचन्द्रयोरन्यतरज्ञाने च तदन्यज्ञानमाह । कोट्याहतैरिति । रव्युदयकालिकरवौ रविचन्द्रान्तरयोगेन विधुर्भवति । तत्र रविचन्द्रान्तरज्ञानम् । तद्यथा । पूर्वानीतदर्शान्ताद्यस्यां तिथौ रव्युदयकालिकोऽर्को ज्ञातोऽस्ति तत्तिथ्यवधिका या गततिथयस्ता द्वादशगुणा रविचन्द्रान्तरांशा भवन्ति । यतो विरविचन्द्रलवा द्वादशहृता गततिथयः

इति । परन्तु तद्रविचन्द्रान्तरं गततिथ्यन्तावधि ज्ञातम् । अपेक्षितं च वर्त्तमानतिथ्युदयावधि । तिथ्यन्तकालिकोदयकालिकयोरहर्गणयोरन्तरमिति तदवमशेषं सावनम् । अवमशेषतो रविचन्द्रान्तरांशज्ञानार्थमनुपातः । यद्येकेन सावनेन रविचन्द्रगत्यन्तरांशा एते १२ । ११ । २७ लभ्यन्ते तदाऽवमशेषान्तःपातिना किमिति गत्यन्तरांशैरवमशेषं गुणनीयम् । शेषस्य कल्पचान्द्रा हरः । गुणहरौ गुणेनापवर्त्त्य शिष्यक्लेशो माभूदित्याचार्येणाद्येषु सप्तस्थानेषु शून्यान्येव गृहीत्वा हरः पाठपठित इति सर्वं निरवद्यम् ॥५॥

**मरीचिः**—अथ लाघवार्थं प्रकारान्तरेण सूर्यचन्द्रान्यतरज्ञाने तदन्यतरज्ञानमुपजातिकयाऽऽह कोट्याहतैरङ्ककृतेन्दुविश्वैरिति । न्यूनाहशेषेऽवमशेषे । अहर्गणानयने गतावमे प्राप्ते यद्भाज्ये शेषं तस्मिन्नित्यर्थः । विश्वेदेवास्त्रयोदश प्रसिद्धाः । एभिरङ्कैः स्थापितै–१३१४९००००००० र्विहृते यत् फलं भागाद्यं तद्द्वादशगुणतिथिभिर्युतं कार्यम् । अत्र तिथिशब्देन चान्द्राहर्गणः प्रागानीतः । कल्पादीष्टकाले तत्साधनात् । अनेनानीतेन रविरहर्गणानीतो भगणादिविकलावयवान्तः । अंशाद्येषु युतश्चन्द्रः स्यात् । तादृशश्चन्द्रहीनः सूर्यः स्यात् ।

अत्रोपपत्तिः । सूर्यचन्द्रान्तरभागाः साध्यास्तदैव सूर्यचन्द्रान्यतरज्ञाने तदन्यतरज्ञानं तत्साधनं च द्वादशभागान्तरेणानयोरेका तिथिरुत्पद्यत इति प्रतिपादितत्वादेकतिथिपर्यायचान्द्रदिने तयोर्द्वादशभागान्तरं कल्पादीष्टचान्द्रदिनेषु प्रागानीतेषु किमित्यनुपातेन चान्द्राहर्गणो द्वादशगुण इष्टतिथ्यारम्भेऽन्तरांशगणः । न च लाघवात् शुक्लादिगततिथ्यनुपातेनान्तरांशज्ञानं मासान्ते सूर्यचन्द्रयोस्तुल्यत्वादिति वाच्यम् । पूर्वाहर्गणानीतभगणेष्विन्दुगतमासतुल्यान्तरापत्तेः । अपेक्षितस्तादृशसूर्योदयासन्नकालेऽहर्गणानीतस्यैतत्कालीनत्वात् । अतस्तिथ्यन्ततत्कालमध्ये यस्तिथ्यङ्कः स द्वादशगुणः पूर्वानीतान्तरांशगणश्च योज्यः । तत्राव-

मशेषस्य सावनस्य तदन्तरे सत्त्वात् चान्द्रीकरणेन तिथ्यङ्कज्ञानं सुलभमिति कल्परविसादिनैः कल्पचान्द्रदिनानि तदैतत्सावनात्मकावमशेषेण कान्यनुपातेनावमशेषस्य पूर्वं कल्पचान्द्रहरस्य कल्पचान्द्रा गुण इति गुणहरयोस्तुल्यत्वान्नाशेऽवमशेषस्य कल्परविसावनदिनानि हार इति। चान्द्रावमशेषस्वरूपमिदं द्वादशगुणितं तदन्तराले तदन्तरांशा भवन्तीति गुणहरौ गुणेनापवर्त्य हरस्थाने खाभ्रबाणगिरिरामखत्रिगोशक्रविश्वमिताङ्क १३१४९३०३७५०० उपपन्नः । तथा चावमशेषं भाज्यस्य हरमत्त फलं भागाद्यं तत्राचार्येण हरे एकादिसप्तस्थानेषु शून्यानि गणितसौकर्यार्थं कृतानि धूलीकर्मणा तादृशहरभक्तफलयोः संपूर्णैकविकलान्तराभावात् ।

"महोदिनैर्वृत्तयशेषतः फलं दिनादि यत् तत् तिथिभिः समन्वितम् ।
तेनार्कनिघ्नेन युतो रविः शशी हीनोऽशकेष्विन्दुरयोष्णदीधितिः ॥
रवीन्दुगत्यन्तरभागताडितं क्षयावशेषं शशिवासरोद्धृतम् ।
रविघ्नतिथ्यंशयुतं तु निःक्षिपेद्रवौ विधुस्तद्रहितो विधू रविः ॥"

इति प्रकारद्वयं सिद्धान्तशेखरकृता यथागतमुक्तम् । एवं चावमशेषे कोट्याहतैरङ्ककृतेन्दुविश्वैरित्युक्तहरभक्ते सूर्यचान्द्रान्तरांशास्तिथ्यन्ततत्कालान्तरे एते द्वादशगुणाश्चान्द्राहर्गणे युक्तास्तादृशसूर्योदयासन्नकाले तदन्तरांशाः । एतैः सूर्यो लघुगतिर्युक्तश्चन्द्रो भवत्यथोच्चन्द्रो हीनः सूर्यो भवत्यत उपपन्नं कोट्याहतैरङ्ककृतेन्दुविश्वैरित्यादि विधुरूनितोऽर्क इत्यन्तम् ॥ ५ ॥

इदानीमधिमासावमशेषाभ्यां चन्द्रार्कानयनमाह ।

कोट्याहतैर्यद्भभैरवाप्तं
न्यूनाहशेषे विहृते कलाद्यम् ।
तत् स्याद्धनाख्यं तरणेर्विधोस्तत्
त्रिभूहतं स्वेषुगुणांशयुक् स्वम् ॥ ६ ॥
चैत्रादियातास्तिथयः पृथक्स्था
विश्वैर्हताः सूर्यविधू लवाद्यौ ।

तौ चाधिशेषाच्छशिमासलब्ध्या
हीनौ युतौ स्वस्वधनाह्वयाभ्याम् ॥ ७ ॥

वा.भा.–अवमशेषाद्भवैः कोटिगुणैर्भक्ताद्यल्लब्धं कलाद्यं तद्रवेर्धनसंज्ञं भवति। तदेव फलं त्रयोदशगुणं स्वकीयेन पञ्चत्रिंशदंशेन युतं विधोर्धनसंज्ञं भवति। अथ चैत्रादिगतास्तिथयो द्विः स्थाप्याः। द्वितीयस्थाने विश्व–१३ गुणास्तावंशात्मकौ रविचन्द्रौ भवतः। परमधिमासशेषाच्छशिमासभक्ताद्यत् फलं तेन द्वावप्यूनीकृतौ। तथा स्वस्वफलेन धनाख्येन युक्तौ कृतौ।

अत्रोपपत्तिः। रविवर्षान्ताद्यावन्तोऽर्कदिवसा गतास्तावन्तोऽर्कभागाः किल भवन्ति। ते कियन्त इति न ज्ञायन्ते। रविवर्षान्तोऽपि न ज्ञायते। अतश्चैत्रादेर्गतास्तिथयो यावन्तस्तावन्त एव सौराहाः कल्पिताः। यथाऽहर्गणानयने स एव भागात्मको रविः। असौ पृथग्विश्वगुणः कृतः। यतस्ताभिरेव द्वादशगुणाभिस्तिथिभिर्युक्तः कर्त्तव्यः। तिथौ तिथौ हि रविचन्द्रान्तरं द्वादश भागाः। अथ चैत्रादिगततिथितुल्याः सौराहाः कल्पितास्तेऽधिमासशेषसंभूतैश्चन्द्रदिनैरधिका जाताः। यतो मध्यममेषसंक्रान्तिकालो रव्यब्दान्तः। तस्य चैत्रादेश्चान्तरं तिथ्यात्मकमधिमासशेषम्। यथा गोले कथितम्।

"दर्शायतः संक्रमकालतः प्राक् सदैव तिष्ठत्यधिमासशेषम्।"

इति। तत् तावत् सौरचान्द्रान्तरमधिकं जातम्। तथा कल्पितचान्द्रदिनसंबन्धि यत् सौरचान्द्रान्तरं तदप्यधिकं जातम्। तदप्यधिमासशेषसंभूतम्। एतदुक्तं भवति। अधिमासशेषात् त्रिंशद्गुणात् स्वच्छेदेन हृताद्ये लभ्यन्ते ते चान्द्राहाः। तेषां चान्द्राणां यावन्तः सौरा भवन्ति तैरधिकोऽर्को जातः। अतस्ते शोध्याः। तेषां चान्द्राणां सौरकरणायानुपातः। यदि कल्पचान्द्राहैः कल्पसौराहा लभ्यन्ते तदाधिमासशेषस्यैः किमिति। पूर्वमधिमासशेषस्य त्रिंशद्गुणस्य सौराहा भाग-

हार इति स्थितम् इदानीं गुणकारस्तुल्यत्वात् तयोर्नाशे कृतेऽधिमासशेषस्य चान्द्राहा भागहारः। ततः पुनर्भाज्यभाजकयोस्त्रिंशताऽपवर्तने कृतेऽधिमासशेषस्य चान्द्रमासा भागहारः। फलं सौराहाः। त एव भागाः। तैरूनः कल्पितोऽर्को निरन्तरः स्यात्। परं तिथ्यन्ते। अस्यौदयिकः कार्यः। तिथ्यन्तार्कोदययोर्मध्येऽवमशेषम्। तच्च सावनम्। तेन चन्द्रार्कावौदयिकौ कार्यौ। तत्रानुपातः। यदि चान्द्राहतुल्येन परमावमशेषेण रविगतिर्लभ्यते तदेष्टेनानेन किमिति। एवमवमशेषं रविगत्या गुणनीयं चान्द्राहैर्भाज्यम्। अत्र गुणकभाजकयो रविगत्याऽपवर्त्ते कृते भागहारे किंचित् प्रक्षिप्य कोट्याहतभवभतुल्यः सुखार्थं भागहारः कृतः स्वल्पान्तरत्वात्। तेन भागहारेणावमशेषे भक्ते याः कला लभ्यन्ते ताः कला रवौ ज्ञेया इति धनसंज्ञाः। अथ चन्द्रस्य परमेऽवमशेषे चन्द्रगतितुल्याः कला भवन्ति। अतो रविगत्या चन्द्रगतौ हृतायां स्वपञ्चत्रिंशदंशाधिकं चन्द्रस्य धनं भवतीत्युपपन्नम्। एवं स्वस्वफलेनाधिकौ तिथ्यन्तकालिकौ चन्द्रार्कावौदयिकौ भवत इति सर्वं निरवद्यम् ॥ ६-७ ॥

वा.वा.—इदानीं चन्द्रार्कानयनमधिमासावमशेषाभ्यामाह। कोट्याहतैर्यद्भवभैरिति। यस्मिन् चैत्रशुक्लादितो वर्तमानमासि यस्यां वर्तमानतिथौ सूर्योदये रविचन्द्रौ कर्तुमिष्टौ तद्दिवससमाधिताहर्गणादधिमासावमशेषे ज्ञातव्ये। नन्वधिशेषमिदमवमशेषं च कयोरन्तरं किं जातीयमिति चेदुच्यते। कल्पसौराहर्गणस्य खण्डत्रयम्। एकं तावत् कल्पादेः समभीप्सितकालनिकटपतितगताधिमासान्तावधि। निकटपतिताधिमासान्तादिष्टसौरवर्षावधि द्वितीयम्। तृतीयं तु चैत्रादिगतमासागततिथ्यवधिका ये चान्द्रास्तत्तुल्यसौराहात्मकम्। इदं तृतीयं खण्डं सौरवर्षादितश्चैत्रादिमासेष्टतिथ्यवधि ये वास्तवाः सौराहास्तेषामज्ञातत्वेनेदृशमङ्गीकृतम्। एवं खण्डत्रययोगः सौराहर्गणः "कथितकल्पगतोऽर्कसमागण" इत्यनेन कृतः। अस्य सौराहर्गणस्य चान्द्रीकरणमनुपातेन। कल्पसौरैः कल्पाधिमासास्तदेष्टसौरैः किमिति लब्धं सावयवं गताधिमासादि। इदं

दिनीकृत्य सौराहर्गणे योज्यं चान्द्रद्युगणो भवति । यद्वा गताधिमासानां सावयवानामपि खण्डत्रयं कृतम् । एकं लब्धाधिमासानामेव ये दिवसास्त-त्तुल्यम् । द्वितीयमिष्टसौरवर्षादिजशुद्धिदिनतुल्यम् । तृतीयं तु सौरव-र्षादित इष्टचान्द्रमासगततिथितुल्यसौरावधि यदधिशेषं तत्तुल्यम् । प्रथ-मसौराहर्गणखण्डे प्रथमलब्धाधिमासदिवसतुल्यं योजितं जाताश्चान्द्राः । द्वितीयखण्डे सौरवर्षादिजा शुद्धिर्योज्या तत्रापि चान्द्रा भवन्ति । तृती-येऽपि सौरवर्षादितश्चैत्रादिगतचान्द्रतुल्यसौराहजनितं योजितं त्रयाणां योगे चान्द्रद्युगणो भवति परन्तु सौरवर्षादितश्चैत्रादिगतचान्द्रतुल्यसौ-राहा यस्मिन् काले भवन्ति तत्कालीनः । अपेक्षितस्तु चैत्रादित एव चैत्रादिगतचान्द्रान्तावधि । अनयोरन्तरमधिशेषं पूर्वमनुपातसिद्धम् । इदं शोध्यम् । पूर्वं पृथक् पृथक् खण्डत्रयेण योजनीयमधुना युगपदेव देय-मिति लब्धाधिमासा एव दिनीकृत्य योज्या इत्युक्तम् । चैत्रादितश्चैत्रा-दिगतचान्द्रतुल्यसौराहावधि ये कल्पचान्द्रास्तेषामन्तरम् । इदं चान्द्रमेव तिथ्यात्मकम् । अतो वक्ष्यते गोले ।

"सौरेभ्यः साधितास्ते चेदधिमासास्तदैन्दवाः" ।

एवमहर्गणतः कल्पगतसाधने यश्चान्द्रगणः समायाति स तु कल्पा-दिमारभ्य चैत्रादितश्चैत्रादिगतचान्द्रावधि । तस्मादधिमासेषु साध्यमानेषु यदधिशेषं समायाति तत् सौरम् । यस्माच्चैत्रादितश्चैत्रादिगतचान्द्रावधि ये सौराः सौरवर्षादितश्चैत्रादिगतचान्द्रतुल्यसौराहावधि ये सौराश्च तेषामन्तरम् । अत एव वक्ष्यते "चेच्चान्द्रेभ्यस्तदा सौराः" इति । सौरेभ्योऽधिमाससाधनं चान्द्रीकरणार्थमेव करिष्यति । एवमवमेष्वपि योज्यम् । सौरवर्षादौ रविः शून्यम् । सौरवर्षादित इष्टकालावधि यावन्तः सौराहास्तावन्तोऽर्कभागाः स्युः । चैत्रादितश्चैत्रादिगत-चान्द्रान्ते रविरपेक्षितः । सौरवर्षादित इष्टकालावधि ये सौरास्तेषामज्ञा-तत्वेन चैत्रादिगतचान्द्रा यावन्तस्तावन्त एव सौरवर्षादितो रवेरंशा इति कल्पितम् । तत्राधिशेषं शोध्यं पूर्वन्यायेन । परन्तु सौरमधिशेषमेव

कल्पितसौरेभ्यो ह्यनुमुचितं वास्तवसौरज्ञानार्थम् । यत् तु सिद्धमधिशेषं तत् तिथ्यात्मकमिति निरूपितम् । अधिशेषस्य सौरीकरणायानुपातः । कल्पचान्द्रैः कल्पसौरास्तदेष्टाधिशेषेण त्रिंशद्गुणितेन कल्पसौराह्णभक्तेन किमिति सौरतुल्ययोर्गुणहरयोर्नाशे त्रिंशता चान्द्रेषु भक्तेषु चान्द्रमासा एव भवन्ति । तस्मादधिशेषाच्छशिमासलब्ध्या हीनाश्चैत्रादिगततिथयो रव्यंशा इष्टतिथ्यन्ते भवन्ति । अस्मिन् रवौ शुद्धूनचैत्रादिगततिथयो द्वादशगुणा योज्याः । स च सौरवर्षादेश्चन्द्रो भवति । अत्र सौरवर्षादिजश्चन्द्रो योज्यः । द्वादशगुणिता शुद्धिः सौरवर्षादौ लवाद्यश्चन्द्रो भवति । तस्मादधिशेषाच्छशिमासलब्ध्या हीनास्त्रयोदशगुणाश्चैत्रादिगततिथयश्चन्द्रस्तिथ्यन्ते भवति । तिथ्यन्तसूर्योदययोर्मध्येऽवमशेषम् । तच्चान्द्रगणसिद्धत्वात् सावनम् । तत्रानुपातः । यद्येकेन सावनेन रविगतिर्लभ्यते तदाऽवमशेषेण किमिति रविगुतिर्गुणो हरस्तु कल्पचान्द्राहाः । गुणहरौ गुणेनापवर्त्य रविहरः कृतः । रविगत्या चन्द्रगतौ हृतायां स्वपञ्चत्रिंशांशयुक्तास्त्रयोदश लब्धाः । अतः सर्वं निरवद्यम् । चन्द्राहतुल्येन परमावमशेषेण रविगतिर्लभ्यते तदेष्टेन किमित्यनुपातः कृतो भाष्यकारेण स त्वयुक्त एव । 'महीमितादहर्गणात् फलानी'ति सावनदिवस एव रविमध्यकला वल्यन्ते न चान्द्रे । तस्मात् तावदिदमयुक्तम् । चान्द्रगणसाधितावमशेषस्य सावनस्येच्छास्थानीयस्य प्रमाणस्थानीयचान्द्राद्विजातीयत्वमपि दोषावहम् । अराशिके प्रमाणेच्छयोः समानजातित्वनियमात् । समानजातित्वं सादृश्यादवगम्यते । सादृश्यमुपाधिना क्वचिदवगम्यते । अशीतिवराटकप्रमाणकस्य पणस्याशीतिवराटकमानपणैः सादृश्यावबोधः । क्वचिज्जात्याऽपि । घटानां घटैः ।

"त्रिज्ये पृथक् कोटिभुजाहते ते कर्णोद्धृते लम्बपलज्यके स्तः" ।

इत्यत्र सर्वक्षेत्रेषु पलभा भुजो द्वादश कोटिः पलकर्णः कर्ण इत्येवमावर्त्तत इत्युपाधिनैव प्रमाणेच्छयोः समानजातित्वमिति न

कश्चिद्दोषः । प्रकृते तु चान्द्रमिदं सावनमिदमित्युपाधिभेदेनैव भेदस्य सुज्ञानत्वात् । प्रमाणेच्छयोर्विसदृशत्वं न दण्डेन परानूद्यते । अतोऽन्यथा भाष्यं व्याक्रियते । तावच्चन्द्रदिनमध्ये सावनं पूर्वोक्तप्रकारेण ज्ञात्वा तन्मध्ये रविगतिमानमानयेत् । चान्द्राहतुल्येनेत्यत्र चान्द्रदिनेऽहः सावनं तच्चान्द्राहशब्देनोच्यते । इयमानीता रविगतिश्च रविगतिशब्देनोच्यते । तस्माद्युक्तोऽयमनुपातः । चान्द्रान्तर्वर्तिना सावनेन तन्मध्यवर्तिनी गतिर्लभ्यते तदाऽवमशेषेण किमिति । यद्वाऽवमशेषस्य कल्पचान्द्राहस्तस्मात् परमावमशेषं कल्पचान्द्रतुल्यमेव स्यात् तदेकसावनतुल्यमतो युक्तोऽनुपातश्चान्द्राहतुल्येन परमावमशेषेणेति । अत्र चान्द्राहपदेन कल्पचान्द्रा उच्यन्ते ॥ ६—७ ॥

**मरीचिः**—अथ प्रकारान्तरेणार्कचन्द्रानयनमुपजातिकाभ्यां लाघवादाह । कोट्याहतैर्युद्गवभैर्वाप्तमिति चैत्रशुक्लादिष्टमासतिथिप्रारम्भसमयपर्यन्तं गतास्तिथयोऽहर्गणानयनगृहीता एव ग्राह्याः । तेन मध्येऽधिमासपातोऽपि चेत् तस्यापि तिथयो न ग्राह्या इति ध्येयम् । एताः पृथक्स्थास्त्रयोदशगुणा भागाद्यौ सूर्यचन्द्रौ स्तः । तिथिमितोऽंशाद्योऽर्कः । त्रयोदशगुणितोंऽशाद्यश्चन्द्र इत्यर्थः । विशेषमाह ताविति । अविशेषात् अहर्गणानयने गताधिमासेष्वागतेषु यद्वाज्यशेषं तदङ्कमितात् शशिमासलब्ध्या कल्पोक्तचान्द्रमासभक्ताप्तफलेन तौ सूर्यचन्द्रौ तिथ्यानीतौ हीनौ । पुनर्विशेषमाह युताविति । स्वस्वधनाख्याभ्यां यथास्थाने युतौ । एतेन धनशब्देन युतं कार्यमिति सूचनादयोदंशादिफलेनेत्युक्तं भवति । चकारः समुच्चयार्थः । भागास्त्रिंशद्भक्ताः । राश्याद्यौ सूर्यचन्द्रौ दिनगणानीतौ तत्तुल्यौ स्त इत्यर्थसिद्धम् । तयोर्भगणज्ञानं च गतवर्षगतचन्द्रमासज्ञानात् प्रयोजनाभावाच्च नोक्तम् । अथार्कचन्द्रयोर्धनफलानयनमाह । कोट्याहतैरिति । न्यूनाहशेषं कोट्याहतैर्भवसुरैर्भक्तं यत् यदङ्कमितं कलाद्यं प्राप्तं तत् फलं सूर्यस्य धनाख्यं स्यात् । तत् सूर्यफलं त्रयोदशगुणं स्वपञ्चत्रिंशदंशयुक्तं विधोः स्वं धनाख्यं स्यात् ।

अत्रोपपत्तिः। "रवेश्चक्रभोगोऽर्कवर्षं प्रदिष्टम्"-इत्युक्तेन मेषाद्यर्कसञ्चाररूपवर्षादितो ये सौरदिवसास्त एव मध्यमसूर्यांशाः। तेषामिष्टशुक्लादिगततिथयो द्वादशगुणिता योज्याश्चन्द्रोऽपि मध्यमः स्यात्। तत्र सौरवर्षाद्यज्ञानेन सौरदिनानां तदादीनामज्ञानात् चैत्रादिरूपचान्द्रवर्षादिज्ञानात्। तत दृष्टकालपर्यन्तं चान्द्रदिनज्ञानेन चैत्रादीष्टतिथ्यारम्भपर्यन्तं चान्द्रदिवसा एव सौरदिवसाः कल्पिताः। एतन्मित एवांशाद्योऽर्कः। अयं द्वादशगुणितशुक्लादिगततिथियुतश्चन्द्रज्ञानार्थं कार्यस्तत्र चान्द्रमासे पूर्णभगणान्तरसम्भवेन चैत्रादीष्टतिथयो द्वादशगुणा योजिता लाघवात्। भगणानां प्रयोजनाभावेन राश्यादिवास्तवचन्द्रज्ञानसम्भवात्। अतः सूर्यस्य तिथिमितत्वकल्पनाल्लाघवेन त्रयोदशगुणानां चैत्रादितिथीनां भागादिचन्द्रत्वं सिद्धम्। अत्र उपपन्नं चैत्रादीत्यद्यर्धम्। अथ सौरदिनज्ञानात् कल्पितसौरे वास्तवचान्द्रमिते सौरचान्द्रान्तररूपाधिशेषमधिकं वास्तवसौरदिनेभ्य इत्यधिशेषमुभयत्र रविसम्बन्धाद्विकाशनीयम्। तत्राहर्गणानयनेऽधिशेषं तदधिमासपतितकालादिष्टतिथ्यारम्भपर्यन्तं ये चान्द्रदिवसाः सावयवास्तत्तुल्यसौरदिनानामधिशेषं चान्द्रांशाः। एतत् तत्र युक्तम्। दृष्टकाले तन्मितसौराभावात् इष्टकाले वास्तवतादृशचान्द्रादधिशेषमानेयम्। तत्तुल्यचान्द्रदिनैः कल्पाधिमासास्तदेष्टचान्द्रदिनैः क इत्यनुपातेनाहर्गणोपपत्तौ दर्शितम्। एतत्सौरमितकल्पसौरैः कल्पचान्द्रास्तदाऽनेन क इति गुणहरनाशेनाहर्गणानयनेऽधिमासलब्धौ शेषं कल्पसौरभक्तरूपमधिशेषं चान्द्रसिद्धमेवास्ति। अतः कल्पचान्द्रैः कल्पसौरास्तदैर्नास्सिद्धेन क इति पूर्वविपरीतेन कल्पसौरतुल्यगुणहरयोर्नाशाच्छेषं कल्पचान्द्रभक्तमित्यधिशेषं रूपं सौरं वास्तवं तत्काले सिद्धमिति वक्ष्यति। एतन्मासादिकमिति दिनात्मकार्थं त्रिंशद्गुणः। शेषस्येति गुणहरौ गुणेनापवर्त्य हरस्थाने चान्द्रमासाः। दिनत्रिंशदंशस्य मासत्वात् अत उपपन्नं तौ चाधिशेषाच्छेषमासलब्ध्या हीनाविति। अथैवं पुष्पवन्ताविष्टतिथ्यारम्भे सूर्योदयकरणार्थमवम-

शेषेण सावनात्मकेन चाल्यौ । तदर्थं कल्पकुदिनैः कल्पसूर्यभगणकला ९३३१२०००००००००० श्चन्द्रभगणकलाश्च १२४७६७१२८००००००० लभ्यन्ते तदाऽवमशेषात्मकसावनेन का इत्यनुपातेनाहर्गणसाधनेऽवमलब्धौ शेषस्य कल्पचान्द्रदिनहरस्य स्थितत्वेन भाज्यशेषं भगणकलागुणितं कल्पचान्द्ररविसावनदिनघातेनानेन खवेघ्नशरेषुदेवेन्द्रतानाष्टाङ्करामगोद्वितत्त्वमितेन २५२९३९८४९१४३३५५०००००००००० भक्तं लब्धं प्रत्येकं कलात्मकं योज्यम् । तत्र सूर्यस्य गुणहरौ गुणेनाब्जगुणितेन रविसुराङ्कमितेन ९३३१२०००००००००० अपवर्त्य हरस्थाने किञ्चिन्न्यूनवेदाष्टाङ्करामाङ्काष्टदृङ् दिग्भमिता २७१०६८९३९८३ । ५९ । ३ । ४५ उत्पन्नाः । अत्र गणितसौकर्यार्थं किंचिदधिकनृपषष्टिदिग्गमिताः ३१०६०१६ । १५ योजिता जाता उक्तहरमिताः २७११००००००० । फलयोर्हरभक्तयोः पूर्णत्रिकलान्तराभावात् इदं फलं सूर्यस्य योज्यमिति धनांशाऽस्यात उपपन्न कोट्याहतैरित्यादि तयोरित्यन्तम् । एवमुक्तमार्गेण चन्द्रहरेणानेन स्वर्गाङ्गनखाङ्गभनखमितेन २०२७६२०६२१ किञ्चिदधोऽवयवयुतेनावमशेषे भक्ते फलं चान्द्रचालनं स्यात् । तत्रेदं गुरुभूतं विहाय लाघवात् सूर्यफलादेव चन्द्रफलमानीतं तदर्थं सूर्यभगणैः सूर्यफलं तदा चन्द्रभगणैः किमित्यनुपातेन गुणहरौ हरेणापवर्त्य गुणस्थाने सावयवाङ्काः १३ । २२ । ७ ४५ । इति सूर्यफलमनेन गुण्यं चन्द्रफलम् । तत्रापि खण्डगुणनार्थं त्रयोदशमितं भिन्नं कृतम् । अत्र खण्डं सावयवम् २२ । ७ । ४५ । इदमेतत्र करणार्थं खार्क=१२० वर्ग १४४०० गुणं जातम् ५३११ । तस्मात् द्वितीयस्थाने रविफलं भवत्रीषुगुणं खार्कवर्गभक्तमिति सिद्धम् । तत्रापि भवत्रीषुगुणस्य खार्कवर्गभागस्तदा त्रयोदशगुणितस्य को भाग इत्यनुपातेन लब्धो भागः किञ्चिन्न्यूनः सपादपञ्चत्रिंशन्मितः ३५ । १५ । अत्र लाघवेनाधोऽवयवेऽनुपातः कृतः स्वल्पान्तरात् । सूर्यफलस्य न्यूनत्वाच्चात उक्तं विधोरित्यादि श्लोकान्तम् । आभ्यां फलाभ्यां योज्यौ क्रमेण

पुष्पवन्ताविति युतौ स्वस्वधनाङ्कयाभ्यामित्युक्तम् । एतत्प्रकारेणैव पुष्प-
वतोः सूक्ष्मं साधनमुक्तं सिद्धान्तशेखरे श्रीपतिना–

"कल्पाधिमासगुणितादवमावमावशेषात्
क्ष्माहोद्धृतात् फलयुतं ह्यधिमासशेषम् ।
मासादिकं फलमतः शशिवासरैः स्यात्
क्ष्माहैर्हृताच्च दिवसाद्यवमाशेषात् ॥
चैत्रादितो विगतमासदिनैर्युतं तत्
कृत्वा दिनाद्यथ पृथग्गुणितं च विश्वैः ।
मासादिना विरहिते विहिते क्रमेण
यद्वा दिवाकरनुपारकरौ भवेताम् ॥

इति श्लोकद्वयेन ॥ ६-७ ॥

इदानीं प्रकारान्तरेण ग्रहानयनमाह ।

**अर्कसावनदिवागणो हतः**
**स्वस्वसावनदिनैस्तु कल्पजैः ।**
**खाभ्रबाणगिरिरामखत्रिगो-**
**शक्रविश्वविहृदाप्तराशिभिः ॥ ८ ॥**
**विवर्जितो विकर्त्तनो गृहादिको गृहादिकाः ।**
**ग्रहा भवन्ति वा बुधैर्विचिन्त्यमन्यदप्यतः ॥ ९ ॥**

वा. भा.–अहर्गणाद्ग्रहस्य कल्पसावनदिनैर्गुणितात् खाभ्रबा
णगिरिरामखत्रिगोशक्रविश्वै–१३१४९३०३७५०० विहृताद्यत् फलं राश्यादि
तेन राश्यादिको रविरूनोऽभीष्टो ग्रहः स्यात् । अस्मादानयनप्रकारा
द्बुधैरन्यदपि प्रकारान्तरं विचिन्त्यम् ।

अत्रोपपत्तिः । भगणैरूना भभ्रमा ग्रहसावनदिवसा भवन्ति । तै
सावनैरूनास्ते भभ्रमा ग्रहभगणा भवन्ति अतोऽहर्गणाद्ग्रहवदनुपातैः
गतभभ्रमान् ग्रहसावनदिवसांश्चानीय तैः सावनैस्ते भभ्रमा वर्जित

यदि क्रियन्ते तदा भगणादिको ग्रहो भवतीत्युपायो दृष्टः । अथ च यो भगणाद्यो रविरागतः सोऽहर्गणतुल्यैर्भगणैर्युतो यावत् क्रियते तावद्गत-भभ्रमा भवन्ति । यतः कुदिनानां रविभगणानां च योगे भभ्रमाः । अत्र भगणानां प्रयोजनाभावाद्राश्यादिरेव रविर्भभ्रमावयवीभूतो गृहीतः । एवं ग्रहगतसावनानयनेऽपि । तत्र ग्रहकल्पसावनैरहर्गणे गुणिते कुदि-नैर्हृते भगणादिकं किल फलं भवति । तद्द्वादशगुणितं राश्यादिकं स्यात् । अतः कुदिनानि द्वादशभिरपवर्त्तितानि भागहारः कृतः । लब्धराशिषु द्वादशतष्टेषु ये भगणा लभ्यन्ते ते प्रयोजनाभावात् त्याज्याः । अत उक्तम् । आप्तराशिभिर्विवर्जितो विकर्त्तन इत्यादि जातं सर्वमुप-न्नम् ॥ ८-९ ॥

वा.वा.—अथ रव्यहर्गणाभ्यां ग्रहानयनमाह अर्कसावनदिवागणो-हत इति । रविभगणसावनयोगे भभ्रमा इत्युक्तम् । 'भभ्रमास्तु भगणैर्विवर्जिता यस्य तस्य कुदिनानि तानि वा' इति कल्पे ग्रहसावनान्यपि वेद्यानि । तत इष्टग्रहेष्टसावनज्ञानं त्रैराशिकेन । कल्परविसावनैः कल्पग्रहसावनास्तदेष्टा-र्कसावनगणेन किमिति । एतानि ग्रहेष्टसावनानीष्टभभ्रमेभ्यः शोध्यानि तत्रेष्टभभ्रमो नामेष्टभगणाद्यरवेरिष्टरविसावनस्य च योगः । इष्टराश्याद्यो रविस्तु भभ्रमावयवः । तस्मादिष्टभभ्रमाणां पञ्चावयवाः । तत्र पूर्वो-क्तानुपातेन ग्रहेष्टसावनेषु यच्छेषं तद्द्वादशगुणं रविकल्पसावनहृतं सद्ये राशयस्ते रविराशिभ्य एव शोध्याः । अत्र राश्यादिग्रहाणामेव प्रयोजना-दनुपातेन सिद्धो यो ग्रहकल्पसावनरवीष्टसावनघातः स एव द्वादशगुणः कार्यः । रविकल्पसावनैर्भाज्यः । तत्र गुणहरौ गुणेनापवर्त्य हर एव खाभ्रबाणेति पठितः । लब्धं राश्यादि चतुर्धा । तद्राश्याद्यरवेः शोधितं जाता राश्यादिका ग्रहाः ॥ ८-९ ॥

मरीचिः—अथ प्रकारान्तरेण सूर्याद्ग्रहानयनं रथोद्धताप्रमाणिकाभ्या-माह अर्कसावनदिवागणो हत इति । प्रागानीतोऽहर्गणः कल्पीयैः स्वस्व-

सावनदिनैः 'भभमास्तु भगणैर्विवर्जिता यस्य तस्य' इति ज्ञातैर्गुणिताः। अस्मात्। इन्द्राणां चतुर्दशसङ्ख्यात्वात् तत्पर्यायपदेन चतुर्दशेत्येतदङ्क-१३१४९३०३७५०० भक्तादाप्तफलराश्यादिभिः। अत्रोपरि द्वादशतष्टमित्यर्थसिद्धम्। अर्कसावनदिवागणाद्गुतादिति पाठे त्ववतिः। ग्रहादिको राश्यादिको विकर्त्तनः सूर्यः। "विकर्त्तनार्कमार्त्तण्ड—"इत्यभिधानात्। विवर्जितो हीनः। ग्रहादिका राश्यादिका ग्रहा भवन्ति। ग्रहा इत्युपलक्षणं कल्पभगणसम्बन्धिनः। तेन यत्सावनेन फलमानीतं तेनोनोऽर्कः स इष्टकाले भवतीत्यर्थः। वा प्रकारान्तरेण। उपसंहारार्थमाह बुधैरिति। अतोऽस्माद्धेतोः सूर्याद्ग्रहाः प्रकारान्तरेण। अर्कचन्द्रौ साधितौ यद्युक्तिभिस्तत्सदृशयुक्त्या अन्यदपि प्रकारान्तरेण ग्रहानयनमुक्तभिन्नं बुधैर्गणितत्त्वज्ञैर्विचिन्त्यम्। तथा च प्रकाराणामनेकत्वसम्भवात् सर्वेऽपि प्रकारा वक्तुं न शक्यन्ते ते स्वबुद्ध्या ज्ञेया इति यथा सूर्याद्ग्रहाः साधितास्तथेष्टग्रहज्ञानादितरग्रहाः साध्याः। तथा हि यद्ग्रहज्ञानमस्ति तस्य सूर्याहर्गणेनानुपातादिष्टकाले सावनानि सावयवानि भगणाद्यात्मकानि साध्यानि एतानि तस्यैव तदात्मकस्य योज्यानि। ततः सिद्धेतरग्रहसावनानि तदात्मकान्यर्कदिनगणानुपातेनानीय हीनानि तत्र शेषं भगणात्मकं तदितरग्रहो भवति।

अत्रोपपत्तिः। 'भभमास्तु भगणैर्विवर्जिता यस्य तस्य कुदिनानि तानि वा' इत्यस्य वैपरीत्येन कल्पग्रहाः सावनोना भभमग्रहभगणा भवन्तीति सिद्धम्। तथेष्टकालेऽपि भगणादिसूर्याहर्गणयोगो गतभभमसङ्ख्या स्यात्। अत्र कल्परविसावनैः कल्पग्रहसावनानि तदाऽहर्गणेन कानीत्यनुपातेनेष्टकाले यद्ग्रहगतसावनानि स एव भगणाद्यो ग्रहो भवति तत्रेष्टकाले राश्यादिग्रहस्यैव सर्वत्रावश्यकत्वेन लाघवाच्च गतभभमग्रहसावनाद्योऽवयवयोरुक्तरीत्याऽन्तरस्य राश्यादिग्रहसम्भवेन गतसावनाद्योऽवयवो राश्यादिक आनेय इति द्वादशगुणो गतसावनानाम्

तेन गुणहरौ द्वादशकुदिनरूपौ गुणेनापवर्त्य कुदिनस्थाने १३१४९३०३०५०० तथा चाहर्गणः स्वस्वकल्पसावनगुण उक्तहरभक्तः फलं सावनावयवराश्याद्यम् । साजात्येनान्तरस्योक्तत्वाद्घट्याद्यकरणेऽपि न क्षतिः । राश्यादिसूर्यस्यैव भभ्रमाद्येऽवयवत्वात् फलेनरविः शेषस्य राश्यादिग्रहत्वप्रतिपादनात् । राशीनां द्वादशाधिकत्वाभावात् । फलं द्वादशतष्टमुपरीति राशिपदेनार्थसिद्धम् । एतद्रीत्याऽन्यप्रकाराणां सम्भवादन्यदपि विचिन्त्यं बुधैर्वैचित्र्यात् । अत उपपन्नमर्कसावनेत्यादि विचिन्त्यमन्यदप्यत इत्यन्तम् ॥ ८-९ ॥

इदानीमानयनप्रकारान्तराणामुपपत्तिमाह ।

यथायथाऽधिमासकाऽवमेन्दुमासपूर्वकाः ।
परस्परं युतोनिता भवन्ति खेटपर्ययाः ॥ १० ॥
त एव सूर्यसावनद्युपिण्डतोऽनुपातजाः ।
तथातथा युतोनिता भवन्ति तेऽथ वा ग्रहाः ॥ ११ ॥

वा. भा.—अत्राधिमासावमेन्दुमासपूर्वका इति पूर्वशब्दोपादानादन्येऽप्यभीष्टा राशयो यथायथा परस्परं युतोनिताः सन्त इष्टग्रहभगणसमा भवन्तीति पूर्वं संप्रधार्य तानेव राशीन् भगणान् प्रकल्प्याहर्गणादनुपातेन फलानि साध्यानि । तेषां फलानां तथातथा योगे वियोगे च कृते ग्रहः स्यादिति । तद्यथा ।

'इन्दुमण्डलगुणेन्दुसंगुणब्रध्नचक्रविवरेऽधिमासकाः ।'

इति चन्द्रभगणानां त्रयोदशगुणार्कभगणानां चान्तरे यद्यधिमासा भवन्ति तदा त्रयोदशगुणार्कभगणाधिमासयोगे चन्द्रभगणाः स्युरित्यर्थाज्जातम् । अतोऽहर्गणादधिमासमानीय त्रयोदशगुणोऽर्कस्तेनाधिकश्चन्द्रः स्यादित्येवमादीनि प्रकारान्तरशतान्युत्पद्यन्ते ॥ १०–११ ॥

वा. वा.—अत्राध्यायान्तमेकादशवृत्तानि भाष्ये स्पष्टानीति ॥ १०-२० ॥

इति श्रीकृष्णदैवज्ञात्मजनृसिंहकृतौ ग्रहानयनाध्यायः ।

**मरीचिः**–अथ विचिन्त्यमित्युक्तं कल्पे उक्ताधिमासावमचन्द्रमासंख्यादयः । आदिपदात् तत्र कथं विचिन्त्यमिति चिन्तनरीतिं प्रमाणिकाभ्यामाह । यथायथेति । त एव सूर्यसावनदिनादयः कल्पोक्तपदार्थसंख्याः परस्परं युतोनिता युता ऊनिता वा इदमुपलक्षणम् । परस्परं गुणिता भक्ता इत्यादि यथायथा यद्रीत्या खेटपर्यया ग्रहभगणसंख्याः कल्पोक्ता भवन्ति इति प्रकारं निश्चित्येष्टकालेऽपि त एवाधिमासादयः प्रकारोपयुक्ताः सूर्यसावनद्युपिण्डतः प्रागनीताहर्गणात् कल्पकुदिनैः कल्पोक्ताधिमासादयस्तदाऽहर्गणेन के इत्यनुपातजाः कार्याः । अतः फलितमाह तथेति । तथातथा तद्रीत्या आनीतास्तेऽधिमासादयो युतोनिता इत्युपलक्षणात् सङ्कलनादिपरिकर्मप्रकारविषयाः कार्याः । अथ वा प्रकारान्तरेण ग्रहभवन्ति । यथा इन्दुमण्डलगुणेन्दुसंगुणेत्युक्तवैपरीत्येन त्रयोदशगुणार्कभगणाधिमासयोगे चन्द्रभगणाः कल्पे चन्द्रभगणाधिमासान्तरं त्रयोदशभक्तमर्कभगणश्च भवतीतीष्टकालेऽहर्गणानुपातेनाधिमासा भगणाद्या आनेयाः तद्युक्तस्त्रयोदशगुणार्कश्चन्द्रः स्यात् । तद्धीनश्चन्द्रस्त्रयोदशभक्तोऽर्कः स्यात् ।एवमन्तरं तरणिचन्द्रचक्रजमित्युक्तवैपरीत्येनेष्टकाले चन्द्रमासा भगणाद्याः साध्यास्तदूनश्चन्द्रोऽर्कः । तद्युतोऽर्कश्चन्द्रः । एवं चन्द्रचक्रदिवसैक्यमूनितमित्युक्तवैपरीत्येनेष्टकालेऽहर्गणाद्भगणाद्या अवमचन्द्रमासचन्द्रदिनभभ्रमाः साध्यास्ततोऽवमे चन्द्रमासोनचन्द्रदिनैरूना भभ्रमयुताश्चन्द्रः स्यादित्यादि । तथा च यस्य कल्पभगणा येन प्रकारेणोत्पन्ना भवन्ति तत्प्रकारेणेष्टकाले स भवतीत्यर्थः ।

अत्रोपपत्तिः । "प्रमाणमिच्छा च समानजाती" इत्युक्तेन यत्प्रमाणकाले गतिः सैवेच्छाकाले अन्यथा समानजातिविरोधापत्तेरिति सुगमा ॥ १०–११ ॥

इदानीमस्योदाहरणभूतानि प्रकारान्तराणि दर्शयन्नाह ।

**द्विचक्रयोगजो ग्रहो वियोगजेन युग्वियुक् ।**

दलीकृतौ च तौ क्रमादमन्दमन्दगामिनौ ॥ १२ ॥
द्विपर्ययान्तरोद्भवग्रहेण वर्जितो द्रुतः ।
स मन्दगोऽथ मन्दगो युतो भवेदमन्दगः ॥ १३ ॥

**वा॰ भा.**–अत्राद्यानयनस्योपपत्तिः संक्रमणगणितेन । द्वितीयस्यातिसुगमा ॥ १२–१३ ॥

**मरीचिः**–अथैतद्रीत्याऽनेकप्रकारा उत्पद्यन्ते तत्रैतस्योदाहरणभूतप्रकारान् विवक्षुः प्रथमं संक्रमसूत्रोपनिबद्धकर्मणा ग्रहानयनं प्रमाणिकयाऽऽह द्विचक्रयोगजो 'द्युचरचक्रहतो दिनसंचयः'-इत्यादिना इष्टाहद्वयभगणयोगमितभगणसंख्याया इष्टकाले भगणाद्यो ग्रहः । तद्भगणान्तरमितभगणानीतग्रहेण स्थानद्वये क्रमेण युग्युक्तो वियुक् हीनः कार्यः । तौ स्थानद्वयस्थावर्धितौ । चः समुच्चये । क्रमात् योगान्तरक्रमात् अमन्दमन्दगामिनौ । द्वयोर्मध्ये यस्य भगणा अधिका यस्य च न्यूनास्तौ शीघ्रमन्दगतिग्रहौ भवतः । ग्रहोपलक्षणादुच्चपातकेन्द्राण्यपि भवन्ति ।

अत्रोपपत्तिः । लघुबृहद्राश्योर्यदन्तरं तल्लघुराशौ क्षिप्यते तदा बृहद्राशिः । अस्मिन् तदूने लघुराशिरिति प्रत्यक्षसिद्धम् । अतो लघुबृहद्राश्योर्योगे ज्ञाते ज्ञाततदन्तरयुक्तिर्द्विगुणो बृहद्राशिः । अन्तरे हीने च लघुराशिर्द्विगुणः । योगे बृहल्लघुराश्योरेव सत्त्वात् । तत एतौ द्विभक्तौ क्रमेण बृहल्लघुराशी स्तः । एवं ग्रहयोरिति सुगमा । अत उपपन्नं द्विचक्रयोगज इत्यादि ॥ १२ ॥

अथ प्रकारान्तरेण शीघ्रमन्दान्यतरज्ञाने तदन्यतरज्ञानं संक्रमोपपत्तिरूपं प्रमाणिकयाऽऽह द्विपर्ययान्तरोद्भवग्रहेणेति । ययोर्द्वयोर्भगणान्तरतुल्यभगणात् द्युचरचक्रेत्यादिनाऽऽनीतो ग्रहस्तेन तद्द्वयान्यतरशीघ्रगो वर्जितो हीनः सः शेषमितो मन्दगतिस्तदितरो भवेत् । अथ ज्ञातो मन्दगतिर्युतोऽमन्दगः शीघ्रगतिस्तदितरः स्यात् ।

अत्रोपपत्तिः । भगणान्तरोत्पन्नस्येष्टकाले तदन्तरत्वादन्तरेण बृहद्राशिरूनो लघुराशिरयं युतो बृहद्राशिरिति पूर्वोक्तेन मन्दशीघ्रग्रहज्ञानं सुगममित्युपपन्नं द्विपर्ययेत्यादि ॥ १३ ॥

पुनः प्रकारान्तरेणाह ।

**केन्द्रोच्चयोश्चञ्चलयोर्वियोगे**
**योगेऽथ वा स्यान्मृदुनोः प्रसाध्यः ।**
***साध्यस्य चक्रैर्गुणितः प्रसिद्धो**
**भक्तो निजैः स्यादथ वा प्रसाध्यः ॥ १४ ॥**

**वा.भा.**—अत्रोपपत्तिः । शीघ्रोच्चाद् ग्रहे शोधिते शीघ्रकेन्द्रं भवति । शीघ्रकेन्द्रे शोधिते ग्रहो भवतीति किमाश्चर्यम् । मन्दोच्चोनो ग्रहो मन्दकेन्द्रम् । तत् केन्द्रं मन्दोच्चेन युतं ग्रहो भवतीति किं चित्रम् । यदि सिद्धग्रहस्य युगभगणैः सिद्धग्रहो लभ्यते तदा साध्यभगणैः किमिति फलं साध्यग्रहः स्यादित्युपपन्नम् ॥ १४ ॥

**मरीचिः**—अथ केन्द्रोच्चज्ञाने ग्रहज्ञानमिष्टग्रहे ज्ञाते तदाऽन्येष्टग्रहज्ञानं च प्रकारान्तरेणेन्द्रवज्रयाऽऽह केन्द्रोच्चयोश्चञ्चलयोरिति । खेचरोच्चभगणान्तरोन्मिता इत्यादिना ज्ञातमन्दशीघ्रकेन्द्रभगणेभ्यो मन्दशीघ्रोच्चभगणेभ्यश्चोक्तप्रकारेणोच्चकेन्द्राणि साध्यानि । तत्र चञ्चलयोः केन्द्रोच्चयोः शीघ्रोच्चकेन्द्रयोर्वियोगेऽन्तरे प्रसाध्यः । यत्केन्द्रोच्चे स इष्टो ग्रहः स्यात् । अथ मृदुनोः केन्द्रोच्चयोर्मन्दोच्चकेन्द्रयोर्योगे यस्य मन्दोच्चकेन्द्रे स इष्टो ग्रहः स्यात् । द्वितीयमाह साध्यस्येति । प्रसिद्धभागणाद्यो ज्ञाते

---

* अस्य नवीनोपपत्तिः । $\frac{\text{सि. यु. भ} \times \text{अह}}{\text{युकु}} = \text{सिग्र} \therefore \frac{\text{अह}}{\text{युकु}} = \frac{\text{सिग्र}}{\text{सि. यु. भ}}$

एवम् $\frac{\text{अह}}{\text{युकु}} = \frac{\text{साग्र}}{\text{सा. यु. भ}} \therefore \frac{\text{सिग्र}}{\text{सि. यु. भ}} = \frac{\text{साग्र}}{\text{सा. यु. भ}} \therefore \frac{\text{सा, यु, भ} \times \text{सिग्र}}{\text{सि. यु. भ}} = \text{साग्र}$

अत उपपन्नम् ।

ग्रह इष्टः साध्यस्य इष्टस्य भगणैर्गुणितो निजैर्ज्ञातस्य ग्रहस्य भगणैर्भक्तः फलं प्रसाध्य इष्टग्रहः स्यात् ।

अत्रोपपत्तिः । खेचरोच्चभगणान्तरोन्मिता इत्यादिनेष्टकाले केन्द्रस्य ग्रहोच्चान्तरत्वं सिद्धम् । तत्र ग्रहभगणेभ्यः शीघ्रोच्चभगणानामधिकत्वा-द्ग्रहोनं शीघ्रोच्चं शीघ्रकेन्द्रं सिद्धमत्र वैपरीत्याद्ग्रहे योजिते उच्चं भवति केन्द्रोनोच्चं ग्रह इति । अत उक्तं केन्द्रोच्चयोश्चलयोर्वियोग इति । एवं ग्रहभगणेभ्यो मन्दोच्चभगणानां न्यूनत्वान्मन्दोच्चोनो ग्रहः केन्द्रमिति सिद्धम् । अत्र वैपरीत्यान्मन्दोच्चयोगे ग्रहः । अत उक्तं योगोऽथ वा स्यान्मृदुनोः प्रसाध्य इति । सिद्धग्रहभगणैः सिद्धग्रहो लभ्यते तदा तदितरेष्ट-भगणैः क इत्यनुपातेनोपपन्नं साध्यस्य चक्रैरित्यादि ॥ १४ ॥

अहर्गणान्मध्यमग्रहमानीयेदानीं मध्यग्रहादहर्गणमाह ।

**साग्रात् सचक्राच्च खगात् कुहघ्नात्**
**तत्कल्पचक्राप्तमहर्गणः स्यात् ।**
**निरग्रचक्रादपि कुट्टकेन**
**वक्ष्येऽग्रतोऽग्राच्च तथाऽग्रयोगात् ॥ १५ ॥**

**वा.भा.**—भगणराशिकलाविकला अन्ते विकलाशेषं च कुदिनैः संगुण्य स्वच्छेदेन विभज्योपर्युपरि निक्षिपेत् । तद्यथा—भगणादिविकलाशेषा-वधि कल्पकुदिनगुणे विकलाशेषस्थाने कुदिनैर्विभज्य विकलास्थाने फलं प्रक्षिप्य तत्र षष्ट्या विभज्य कलास्थाने निक्षिप्यैवं भगणान्तं यावत् । तत्र कल्पभगणैर्हृतेऽहर्गणः स्यात् । अत्रोपपत्तिर्विलोमगणितेन । तथा निरग्रचक्रादपि ग्रहात् तथा केवलादग्रादपि तथा शेषयोः शेषाणां वा योगादहर्गणानयनमग्रत इति प्रश्नाध्याये कुट्टकार्द्यविधिना वक्ष्ये ॥ १५ ॥

**मरीचिः**—अथानीतग्रहाणां शुद्धत्वज्ञानार्थं ग्रहेभ्योऽहर्गणानयनमुपजाति-कयाऽऽह साग्रात् सचक्रादिति । खगात् राश्यादिविकलान्तावयवात्मक-ग्रहात् । तदात्मके ग्रहपदस्य शक्तत्वात् । भगणाद्यात्मकार्थमाह ।

सचक्रादिति गतभगणसहितात् । तथा च भगणादिविकलान्तावयवात्मकाद्ग्रहात् । कुहघ्नात् कल्पकुदिनगुणितात् । ननु पूर्वोक्तग्रहसाधनप्रकारेण विकलावयवान्तग्रहज्ञानेऽपि विकलाशेषादधोऽवयवाद्ग्रहात् स्थूलग्रहग्रहणेनाहर्गणः कथं सिद्ध्येदत आह साग्रादिति । अग्रेण विकलाप्राप्तौ भाज्यशेषं तेन सहितः साग्रस्तस्मात् । तथा च ग्रहविकलागुणितकल्पसावनेषु विकलाशेषं योज्यं तच्छेपत्वात् षष्ट्या भक्ते फलं कलास्थाने तत्र षष्ट्या भक्ते फलं भागस्थाने ततस्तत्र त्रिंशद्भक्ते फलं राशिस्थाने ततस्तत्र द्वादशभक्ते फलं भगणस्थाने योज्यमिति परिभाषया गुणनफलं निरवयवं भगणस्थाने कार्यम् । एतादृशात् । तत्कल्पचक्राप्तं यो गुणितस्तस्य कल्पभगणैर्भक्ताद्य लब्धमहर्गणः पूर्वसाधितः स्यात् । तथा च ग्रहादहर्गणश्चेत् सिद्धस्तथाऽसौ शुद्धोऽन्यथा त्वशुद्ध इति भावः । ननु 'खचरच-क्रहतो दिनसञ्चय' इत्यादिनाऽऽनीतस्य ग्रहस्य राश्यादिविकलावयवान्तज्ञानप्रयोजनाद्भगणविकलाशेषयोः परिमार्जनेन तदज्ञानाद्राश्यादिविकलान्तावयवात्मकग्रहज्ञानेऽहर्गणः कथं सिद्ध्येदत आह निरग्रचक्रादिति निर्गतेऽग्रचक्रे यस्मात् तादृशग्रहात् राश्यादिविकलान्तावयवात्मकात् । अग्रतो 'राश्योदेविकला दृढभगणगुणाश्चक्रविकलकाभक्ताः' इत्याद्युक्तप्रकारेणानीतभगणशेषात् कुट्टकेन 'दृढभगणा येन गुणाः' इत्यादिप्रश्नाध्यायोक्तप्रकारेण वक्ष्येऽहर्गणमिति शेषः । अपिः समुच्चये । अथैतत्प्रसंगेन वक्ष्यमाणप्रकारौ स्मारयति केवलविकलाशेषात् 'कल्प्याऽथ शुद्धिर्विकलावशेषम्"-इत्यादिनोक्तकुट्टकप्रकारेण कुट्टकाध्याये वक्ष्ये । एतेन पाटीबीजे ग्रहगणितोत्तरं कृते इति सूचितम् । अग्रयोगात् भगणशेषाद्यग्रयोगात् । 'उद्दिष्टं कुहतष्टमम्बुधिहृतम्'-इत्यादिना प्रश्नाध्याये तथाऽहर्गणं वक्ष्ये इत्यर्थः ।

अत्रोपपत्तिः । कल्पग्रहभगणैः कल्पसूर्यसावनतुल्याहर्गणस्तदा गतभगणाद्यवयवरूपग्रहेण क इत्यनुपातेनाहर्गणज्ञानम् । तत्र विकला-

शेषाद्व्यवयवसम्भवान्निरवधित्वाल्लाघवाच्च विकलाशेषे कुदिनहरस्य-गुणहरयोस्तुल्यत्वाच्चाशक्यत्वेन गुणनोत्तरं विकलास्थाने विकलाशेषं केवलं योज्यमत उपपन्न सायात् सचक्रादित्याद्युक्तम् ॥ १५ ॥

इदानीमहर्गणादपि कल्पगतमाह ।

अभिमतद्युगणादवमैर्हतात्
क्षितिदिनाप्तगतावमसंयुतः ।
दिनगणः स भवेत् तिथिसञ्चयः
पृथगतोऽधिकमाससमाहतात् ॥ १६ ॥
विधुदिनाप्तगताधिकमासकैः
कृतदिनै रहितोऽर्कदिनोच्चयः ।
भवति मासगणः खगुणोद्धृतो
रविहृतः स च कल्पगताः समाः ॥ १७ ॥

**वा.भा.**–स्पष्टार्थमिदम् ।

अत्रोपपत्तिस्त्रैराशिकाभ्याम् । अहर्गणानयनाद्विलोमप्रकारेण कलिगतानयनं सुगमम् ।

**मरीचिः**–नन्वहर्गणस्याशुद्धत्वे ग्रह शुद्धि कथमतोऽहर्गणस्य शुद्धत्वज्ञानाय कल्पगतवर्षाद्यानयनं तत एव द्रुतविलम्बिताभ्यामाह अभिमतद्युगणादिति । अहर्गणानयनश्लोकानुरोधेन स्पष्टार्थम् । अवमशेषाद्घट्याद्यवयवो न ग्राह्यः । अधिशेषाच्चैत्रादिगतमासशुक्लादिगततिथिज्ञानार्थं दिनाद्यवयवो न ग्राह्यः । तदप्रयोजने ग्राह्य इति ध्येयम् ।

अत्रोपपत्तिः । कल्पभावनैः कल्पावमानि तदाऽहर्गणेन कानीत्यनुपातेनावमानि निरग्राणि योज्यान्यहर्गणे तिथ्यन्तकाले च न्द्राहर्गणसिद्ध्यर्थं पूर्वं तथैव सिद्धत्वात् । निरवयवत्वेन लाघवाच्च कल्पचान्द्रदिनैः कल्पाधिमासास्तदेष्टचान्द्रैः क इत्यनुपातेनाधिदिनान्यत्र कुतो नानीतानि लाघवादिति वाच्यम् । कल्पेऽधिदिननिबन्धनाभावात् सौरा-

हर्गणस्त्रिंशद्भक्तः सौरमासाः फलम् । शेषं सौरदिनानि । द्वादशभक्तास्ते गतसौरवर्षाणि मध्यममेषसङ्क्रमकाले शेषम् । ततः सङ्क्रान्त्यवधिसौरमासाः । एत एव "कोष्ठ्याहतैर्यद्युवै"-रित्यादिना सूर्यचन्द्रसाधने'ऽधिशेषाच्छशिमासलब्ध्या'इत्यनेन चैत्रादिचान्द्रदिनानां सौरदिवसाः प्रतिपादिताः । अत एव तत्स्थाने चैत्रादिचान्द्रमासशुक्लादिगततिथिज्ञानार्थं निरवयवाधिमासा हीनाः कार्याः । शेषं सौरचान्द्रदिनयोगस्तादृशो भवति । सौरदिनानां बहुत्वादर्कदिनोच्चय इत्युक्तमिति तथाऽपि न क्षतिरित्यभिमतद्युगणादित्यादि श्लोकद्वयं पूर्ववैपरीत्येनोपपन्नम् ॥ १७ ॥

इदानीं कलिगताद्यहर्गणमाह ।

**कलिगतादथ वा दिनसञ्चयो**
**दिनपतिर्भृगुजप्रभृतिस्तदा ।**
**कलिमुखध्रुवकेण समन्विता**
**भवति तद्द्युगणोद्भवखेचरः ॥ १८ ॥**

**वा. भा**—अत्र कलिगताहर्गणेऽयं विशेषः । शुक्राद्यो वारो गणनीयः । यतः कल्पगतादहर्गणात् कलिमुखे शुक्रवारो भवति । तत्र च ये ग्रहास्ते ध्रुवसंज्ञाः कल्पिताः । तद्द्युगणभवः खेचरश्च । कलिमुखध्रुवकेण समन्वितः कार्य इत्यत्र वासनाऽपि सुगमा ।

**मरीचिः**—अथ गणितलाघवार्थमुक्तप्रकारेण कलिगतवर्षेभ्योऽहर्गणादकं साध्यमिति तद्द्रुतविलम्बितेनाह कलिगतादथ वा दिनसञ्चय इति । अथ वा गणितसौकर्यार्थं कलिगतात् कलियुगचरणप्रारम्भाद्गतसौरवर्षगणाच्चन्द्राद्रीन्दुगुणाः शक्रयुता इति ज्ञानात् 'कथितकल्पगतोऽर्कसमागणः'-इति प्रागुक्तप्रकारेणाहर्गणः साध्यः । वारासंवादाद्विशेषमाह दिनपतिरिति । तदा तस्मिन्नहर्गणे दिनपतिर्वारो भृगुजप्रभृतिः शुक्रपूर्वगणनयोत्क्रमेण गण्य इति । अस्माद्ग्रहसाधने विसंवादाद्विशेषमाह कलिमुखेति । तद्द्युगणोद्भवखेचरः कलिगतसाधिताहर्गणात् द्युचरचक्रत्यानीतग्रहः

कलिमुखध्रुवकेण कलिप्रारम्भकाले यः स्वस्वध्रुवस्तेन समन्वितो राश्यादिषु साजात्येन युक्तो ग्रहो राश्यादिको भवति भगणानामप्रयोजनात् ।

अत्रोपपत्तिः । वारप्रवृत्तिरूपकल्पादितो ग्रहसाधने लाघवादिष्टकालादहर्गणे साधिते तदुत्पन्नग्रहस्तत्कालादेव । कल्पादित इति । अहर्गणादिकाले कल्पादितो यो ग्रहो भवेत् स योज्यस्तत्र कल्पादावधिशेषावमशेषाभावादहर्गणसाधने कल्पादिरीतिरेव भवतीति कलिगतादहर्गणः साधितः । अत एव करणादौ तदानयने तत्क्षेपं योजितमस्ति । कल्यादौ कल्पादहर्गणे साधिते सप्ततष्टे शुक्रवारो भवतीति तदादिगणना । कल्यहर्गणानीतवारे यथा कल्पवर्षैः कल्पकुदिनानि तदा कल्यादितः कल्पादिवर्षैरेभिः १९७२९४४००० कानीत्यनुपातेन परस्परमपवर्त्तने एतेऽङ्काः १५७७९१७८४५ । ४५६७ अनेनाङ्केन गुणनीया अहर्गणो भवति । वारापेक्षायाः सत्त्वात् पूर्वमेव सप्ततष्टौ तौ प्रथमे चत्वारो द्वितीये त्रयः । अनयोर्घातः सप्ततष्टः शेषं पञ्च सूर्यादिगणनया शुक्रवार इति । कल्याद्यहर्गणानीतग्रहे कल्पादिजातग्रहो योज्य इति तद्ग्रहस्य योजने स्थिरत्वाद्ध्रुवक इति संज्ञा । अतः कलिमुखध्रुवकेण समन्वित इति ॥ १९ ॥

इदानीं कलिमुखग्रहानयनमाह ।

खाद्रिरामाग्नयः कृग्निरामाङ्कका
वेदवेदाङ्कचन्द्रा विलिप्ताः क्रमात् ।
षड्रसाङ्गाब्धयोऽङ्गाभ्रवेदाब्धयो
वेदषट्काभ्रभूपाभ्रभूसम्मिताः ॥ १९ ॥
वेदचन्द्राद्रिवेदाब्धिनागाः कर-
द्वयब्धिवेदाब्धिशैला भवेयुः कुजात् ।
द्वापरान्तध्रुवाश्चक्रशुद्धास्तथा
सूर्यतुङ्गेन्दुतुङ्गेन्दुपातोद्भवाः ॥ २० ॥

**वा. भा.**—स्पष्टार्थमिदम् ।

कुजादीनां सर्वेषां ध्रुवाश्चक्रशुद्धाः पठिता लाघवार्थम् ।

| मं | बु | बृ | शु | श | र॰ तुं० | चं॰ तुं० | चं॰ पा० |
|---|---|---|---|---|---|---|---|
| ११ | ११ | ११ | ११ | ११ | २ | ४ | ५ |
| २९ | २७ | २९ | २८ | २८ | १७ | ५ | ३ |
| ३ | २४ | २७ | ४२ | ४६ | ४५ | २९ | १२ |
| ५० | २९ | ३६ | १४ | ३४ | ३६ | ४६ | ५८ |

इति ग्रहानयनाध्यायः ।

---

**मरीचिः**—अथात्रोपयुक्तग्रहध्रुवाङ्कान् स्रग्विणीभ्यामाह । खाद्रिरामाग्नय इतः कुजादिति ल्यब्लोपे पञ्चमी । तेन भौममारभ्य पञ्चग्रहाणां शन्यन्तानामेताः क्रमात् खाद्रिरामाग्नय इत्याद्यङ्कस्थापनेन विकला भौमस्य ३३७०। बुधशीघ्रोच्चस्य ९३३१। गुरोः १९४४। शुक्रशीघ्रोच्चस्य ४६६६। शनेः ४४०६। चक्रशुद्धा द्वादशराशिविकलाभ्यो १२९६००० हीना द्वापरान्तध्रुवाः कलिप्रारम्भध्रुवा विकलात्मका भवन्ति । तद्यथा-भौमस्य १२९२६३० । बुधशीघ्रोच्चस्य १२८६६६९ । गुरोः १२९४०५६ । शुक्रशीघ्रोच्चस्य १२९१३३४। शनेः १२९१५९४ । एता विलिप्ताः १०१६०६४, ८४४२१४,७४४४२२ । तथा तद्वच्चक्रशुद्धाः क्रमेण सूर्यमन्दोच्चचन्द्रमन्दोच्चपातोद्भवा द्वापरान्तध्रुवाः। तेषां त्रयाणां ध्रुवका भवन्ति । तद्यथा सूर्यमन्दोच्चस्य २७९९३६,चन्द्रमन्दोच्चस्य ४५१७८६, चन्द्रपातस्य ५५१५७८ विकलानां परिभाषया जातराश्यादिका ध्रुवास्तेषाम् । तद्यथा सूर्यमन्दोच्चस्य २। १७ । ४५। ३६ । चन्द्रमन्दोच्चस्य ४ । ५ । २९ । ४६ । चन्द्रपातस्य ५ । ३ । १२ । ५८ । भौमस्य ११ । २९ । ३ । ५० । बुधशीघ्रोच्चस्य ११ । २७ । २४ । १९ । गुरोः ११ । २९ । २७ । ३६ । शुक्रशीघ्रोच्चस्य ११ । २८ । ४२ । १४ । शनेः ११ । १८ । ४६ । ३४ ।

अत्रोपपत्तिः । कल्पादितः कल्यादिवर्षैः सप्तघ्नवेदाब्ध्यङ्काङ्गनगाङ्केन्दुमितैः १९७२९४४००० कल्पसौरवर्षैः कल्पाधिमासावमे तदिष्टवर्षैः के इत्यनुपातेनाधिमासावमयोर्निरग्रतादर्शनाद्दर्शान्तसूर्योदयमेषसंक्रमकालानामभेद इति सिद्धम् । तत्र सप्ताङ्कपञ्चवेद–४५६७ गुणितशरवेदभूपगोसप्तसप्ततिथिमितानाम् १५७७९१६४५ अहर्गणत्वप्रतिपादनादयमहर्गणः ७२०६३४४४२७१५ पञ्चेन्दुभकृताब्ध्यब्धिव्यङ्कखद्विनगैर्मितः । अस्माद्गुणप्रयोजनाभावेनार्कसावनदिवागण इत्यादिना ग्रहाणां राश्यादिध्रुवाः समानीताः । तत्र सूर्यचन्द्रयोः पूर्णत्वेन स्वतः सिद्धत्वात् भौमादीनां राश्यादिफलानयनेऽहर्गणोक्तगुणहरौ तिथिद्व्यगाङ्कतत्त्वेषुमितैः ५२५९७२१५ अपवर्त्तितौ जातौ कल्पे सावनानां गुणहरौ १३७० । २५० । अत्र फलस्य राश्यात्मकत्वात् स्वस्वसावनैः फलमुपरि द्वादशतष्टं जातं सर्वेषां राश्यादि तद्यथोक्तग्रहाणाम् । मं ०।०। ५६। १० । बु· शी· ३० । २। ३५ । ३१ । बृ० । ० । ३२ । २४ । शु· शी· ३·० । १ । १७ । ४६ । श·०। १ । १३ । २६ । सू· उ· ९ । १२ । १४ । २४ । चं· उ· ७ । २४ । ३० । १४ । चं० पा· ६ । २६ । ४७ । २ । एते सूर्याद्राश्यादिशून्यमिताच्छोध्या ग्रहा भवन्ति । एते निबन्धनीया इत्यङ्कबाहुल्याद्भौमादिपञ्चानां तत्साहचर्येण सूर्योच्चादीनां च सावनस्थानापन्नराश्यादिफलमेव निबन्धनार्थं गृहीतम् । अङ्कस्वल्पत्वेन लाघवात् । अत्रापि राश्यंशादिविभागेनैव तदुक्तश्लोकबहुत्वसंभवात् लाघवार्थं विकला एव निबद्धाः । अत एव सूर्याच्छोधनार्थं चक्रशुद्धा इति । अत उपपन्नं स्वाद्रिरामाभय इत्यादिश्लोकद्वयम् ॥ १९–२० ॥

अध्यायस्य समाप्तिं सूचयति इति ग्रहानयनाध्याय इति स्पष्टम् । अन्यथाऽग्रिमग्रन्थोक्तावसङ्गततापत्तेः । उक्तविषयाभावादिति भावः ।

इदानीं कक्षाप्रकारेण ग्रहानयनं विवक्षुः खकक्षां तावदाह ।

कोटिघ्नैर्नखनन्दषट्कनखभूभृद्भुजङ्गेन्दुभि-
ज्योतिःशास्त्रविदो वदन्ति नभसः कक्षामिमां योजनैः ।

तद्ब्रह्माण्डकटाहसंपुटतटे केचिज्जगुर्वेष्टनं
केचित् प्रोचुरदृश्यकगिरिं पौराणिकाः सूरयः ॥ ११ ॥
करतलकलितामलकवदमलं
सकलं विदन्ति ये गोलम् ।
दिनकरकरनिकरनिहततमसो
नभसः स परिधिरुदितस्तैः ॥ १२ ॥

वा. भा.–एभिर्योजनैस्तुल्यां गणकाः खकक्षामाकाशपरिधिं वदन्ति । तत्र कथमनन्तस्याकाशस्येयत्ता वक्तुं शक्यत इत्याशङ्क्याऽहर्पतिद्युतियुजो नभसः परिधेरिदं मानं वदन्ति । अत एव पौराणिकास्ते ब्रह्माण्डपरिधिं वदन्ति । केचिल्लोकालोकं वदन्ति । यतस्तदन्तर्वर्त्तिन एवार्करश्मयः । एवमन्ये वदन्तीति नास्माकं मतमित्यर्थः । प्रमाणशून्यत्वात् । करतलकलितसकलब्रह्माण्डगोला एवं वक्तुं शक्नुवन्ति ॥ १–२ ॥

वा.वा.–अथ कक्षाध्यायस्तत्र ग्रहकक्षाखकक्षयोर्ज्ञानोपायो भगणोपपत्तौ चिन्तितः । नक्षत्रकक्षाज्ञानं भूगर्भभूपृष्ठस्थक्षितिजान्तराले दृङ्मण्डले स्वस्वक्षितिजोर्ध्वशङ्कुद्वयान्तरकलाभ्यः सुगमम् ।

"पश्येज्जलादौ प्रतिबिम्बितं भं खेटं दृगौच्च्यं गणयेच्च लम्बम् ।
तल्लम्बपातप्रतिबिम्बमध्यं दृगौच्च्यहृत् सूर्यहतं प्रभा स्यात्" ॥

छायातः शङ्कुर्यः स तु भूपृष्ठस्थक्षितिजात् । त्रिप्रश्नविधिना भौमादिवन्नक्षत्रशङ्कुः साध्यः । स तु भूगर्भस्थक्षितिजादूर्ध्वं भवति । आभिः शङ्क्वन्तरकलाभिर्भूव्यासार्धयोजनानि तदा चक्रकलाभिः किमिति भकक्षा भवति । सा च रविकक्षातः षष्टिगुणोत्पद्यते । कक्षासाधनस्य मनुष्यैरेवं कर्त्तुमशक्यत्वादागम एव कक्षामाने प्रमाणमित्युक्तम् । स्वकक्षातो वा शङ्क्वन्तरसाधनं वैपरीत्येन रवीन्द्वोरेव कक्षातः शङ्क्वन्तरसाधनम् । भौमादीनां तु ।

"ग्रहस्य कक्षा चलकर्णनिघ्नी स्फुटा भवेद्व्यासदलेन भक्ता" ।

इति स्फुटकक्षातः शङ्कान्तरं साध्यम् । अथ ग्रहकक्षोपरि चलोच्चकक्षाऽस्ति तदधो वा । नाद्यः । ग्रहापेक्षया चलोच्चगतेरल्पत्वं प्रसज्येत तच्चायुक्तं प्रत्यक्षविरोधात् । न द्वितीयः । भूगर्भाद्दूरतरप्रदेशावस्थितिनिबन्धनोऽयमुच्चव्यपदेशो बाध्येत । दूरप्रदेशावस्थितत्वं नाम स्वीयग्रहादनधःस्थितत्वम् । तस्माद्ग्रहकक्षैव तुङ्गपातयोः कक्षेत्याह—

"ग्रहस्य कक्षैव हि तुङ्गपातयोः पृथक् च कल्प्याऽत्र तदीयसिद्धये"-

ग्रहकक्षा या तूच्चप्रदेशस्यैवोच्चत्वव्यपदेशः । ग्रहकक्षाया यत्र विमण्डलेन संयोगस्तत्प्रदेशस्य पात इति संज्ञा । कुजगुरुशनिचलोच्चानां प्रत्यक्षोपलब्धगतेर्मध्यरविगतितुल्यत्वदर्शनान्मध्यरविश्चलोच्चमिति कल्पना । वस्तुतस्तु स्वीयग्रहकक्षास्थानामेव चलोच्चानां नन्दाक्षाः कला भुजगाश्च विकला गतिरिति । अत्र 'ग्रहस्य चक्रैर्विहृता खकक्षा भवेत् स्वकक्षा'-इति या तुङ्गपातानां पृथक् कक्षा समायाति सा तु

"स्वया स्वया तानि पृथक् च कक्षया
हृतानि वा स्युर्भगणादिका ग्रहाः" ।

इति प्रकारेण तेषां साधनार्थमेवोपयुज्यते । न तेषामवस्थित्यर्थमित्यर्थः । सममण्डलमप्राप्तस्य रवेः समशङ्कूत्पत्तिवत् । नन्वेवं विसदृशगतीनां तुङ्गपातग्रहाणामेककक्षास्थित्यङ्गीकारे रव्यादीनां ग्रहाणां सर्वेषामप्येककक्षास्थितत्वं कुतो न स्यात् । स्यादेतद्यदि ग्रहभेदयोगकाले ग्रहबिम्बयोरूर्ध्वाधरत्वानुभवो न भवेत् । शीघ्रफलाभावे भूमेर्दूरतरप्रतिमण्डलप्रदेशावस्थितो ग्रह एवोच्चपदेनोच्यते । प्रतिमण्डले विलोमं भ्रमतो मेषादेर्या गतिः सैवोच्चगतिरित्युच्यते । कक्षास्थप्रदेशविशेषत्वेन सिद्धस्योच्चस्य को नामभिन्नकक्षास्थितत्वं वदेत् । तथैव प्रतिमण्डलेनगच्छतो ग्रहस्य यत्र प्रदेशे शराभावः स एव प्रदेशः पात इति । तस्मादस्ति मिथो ग्रहाणां वैषम्यं ग्रहतुङ्गपातेभ्य इति सिद्धम् । एवं विसदृशगतीनां तुङ्गपातग्रहाणामेककक्षास्थितत्वमुक्तम् । अधुना तुल्यगतीना-

मपि रविबुधशुक्राणां कक्षाभेदमाह अर्कस्य कक्षैवेति कक्षासाधनप्रकारेण साधिते कक्षे ज्ञशुक्रयोश्चलोच्चकक्षे एव भवतः । ज्ञशुक्रमध्यकक्षाभ्यां खकक्षातो भागे गृहीते ज्ञशुक्रचलोच्चभगणा भवन्ति । ज्ञशुक्रयोर्मध्यगतौ साध्यमानायां रविमध्यगतितुल्यैव तयोर्गतिरुत्पद्यते । अत उक्तं चलतुङ्गकक्षायामेव ज्ञशुक्रयोरर्कमध्यगत्या भ्रमणमिति । किन्तु ज्ञशुक्रयोर्योजनात्मिका गतिः पादोनगोऽक्षधृतिभूमितयोजनेभ्यो भिन्ना । कक्षाभिन्नत्वे योजनात्मककलात्मकगत्योरभेदासम्भवात् । लघुवृत्ते लघ्वः कला महति वृत्ते महत्य इति कलात्मकगतेरेकत्वस्वीकारे योजनगतिरवश्यं भिद्यत इति भावः । तयोर्गतेरानयनं त्रैराशिकेन । मध्यचलोच्चकक्षायोजनानि चक्रकलाभिस्तदा रविमध्यगतितुल्यकलाभिः किमिति ज्ञशुक्रयोर्योजनात्मिके गती भवतः । अतः सर्वं निरवद्यम् ।

इति कृष्णदैवज्ञात्मजनृसिंहकृतौ कक्षाध्यायः ।

---

**मरीचिः**—अथ यन्मार्गेणैते ग्रहा गच्छन्ति तन्मार्गानुमिताकाशस्य वृत्तानां योजनात्मकमध्यममानं तदाश्रयत्वेनोपजीव्यत्वाद्विवक्षुः प्रकारान्तरेण ग्रहानयनार्थं च खकक्षां प्रथमं शार्दूलविक्रीडितेनाह कोटिघ्नैरिति । १८७१२०६९२००००००००० योजनैः ।

"यवोदरैरङ्गुलमष्टसंख्यैर्हस्तोऽङ्गुलैः षड्गुणितैश्चतुर्भिः ।
हस्तैश्चतुर्भिर्भवतीह दण्डः क्रोशः सहस्रद्वितयेन तेषाम् ॥" इति
"स्याद्योजनं क्रोशचतुष्टयेन" इति प्रागुक्तप्रदेशैरिमां प्रसिद्धां

नभसः कक्षां खपरिधिं ज्योतिःशास्त्रविदो गणका वदन्ति एतत्तुल्यां खकक्षामूचुः । एवं च

"खव्योमखत्रयखसागरषट्कनागव्योमाष्टशून्ययमरूपनगाष्टचन्द्राः"*

इति सूर्यसिद्धान्तोक्तस्वकक्षामानेन १८७१२०८०८६४००००००० विसंवादेऽपि भगणोपजीवकत्वाच्च क्षतिः ।

* नेदं प्रचरितसूर्यसिद्धान्ते उपलभ्यते ।

तथा च ब्रह्मगुप्तोक्तवाक्यम्—

"अम्बरयोजनपरिधिः शशिभगणाः शून्यखखजिनाग्निगुणाः" इति ।

सिद्धान्तशेखरेऽपि—

"द्व्यङ्कर्तुखेनागधृतिप्रमाणा कक्षाऽम्बरस्यार्बुदयोजनघ्नी"-इति ।

ननु परमहत्परिमाणस्याकाशस्य मध्यविधमानासंभवादिदमसंगत-मित्यतस्तत्समाधानरूपे मतान्तरे आह तदिति । यदेतदाकाशपरिधि-मानमुक्तं तत् तन्मितं ब्रह्माण्डमेव "कटाहद्वितयस्येव संपुटं गोलकाकृति" * इति सूर्यसिद्धान्तोक्तेः। तस्य तटे सन्धौ वेष्टनं परिधिम्। पौराणिकाः केचित् सूरयो गणका जगुरूचुः । तथा च गोलाकारब्रह्माण्डावच्छिन्नाकाशपरि-धिमाहुः । द्वितीयमतमाह केचिदिति । केचित् पौराणिकाः सूरयोऽदृश्य-दृश्यकगिरिं प्रोचुः। पश्चिमपूर्वस्थलोकालोकपर्वतयोर्दक्षिणोत्तरदिशि मिल नात् तदवच्छिन्नाकाशपरिधिं "लोकालोकेन वेष्टितम् †"-इति सूर्यसिद्धा-न्तोक्तेः । "लोकालोकश्चक्रवालः" इत्यभिधानं चाहुः ।

तथा च तद्वाक्यम्—

"हिरण्यगर्भाण्डकटाहसंपुटप्रवेष्टनं तच्च बभाषिरे बुधाः ।

अदृश्यदृश्यं च गिरिं पुरातना जगुः खकक्षामिति गोलवादिनः"॥

इति । एतन्मते नोक्तदोष इति ॥ १ ॥

ननु ब्रह्माण्डे लोकालोकपर्वते च बाह्यान्तर्गतपरिधिद्वयसंभ-वात् कस्येदं मानमित्येतन्मतेऽपि संशयस्तत्त्वमित्यत एतन्मतद्वयपरि-ष्काररूपमतान्तरमार्ययाऽऽह करतलकलितामलकवदिति । पौराणिकैर्ग-णकैः स उक्ताङ्कमितो नभसः परिधिरुक्तः। उक्तदूषणं निवारयति । दिन-करेति। सूर्यकिरणसमूहविध्वस्तान्धकारस्येत्यर्थः । अत्र मानमाह करतले-त्यादि । करतलेऽग्रहस्ते कलितो गृहीतो य आमलको धात्रीफलं तद्वद्

* द्रष्टव्यो भूगोलाध्याये २६ श्लोकः ।

† द्रष्टव्यो ज्योतिषोपनिषदध्याये १६ श्लोकः ।

मलं निर्दूषणं गोलं ब्रह्माण्डगोलं सकलं संपूर्णं ये विदन्ति तैरित्यर्थः । एतादृशोक्तिरेव मानमाप्तवाक्यत्वादिति भावः । तथा च सूर्यकिरणाग-मनविषयाकाशावच्छिन्नगोलस्य परिधिमङ्गीकुर्वन्ति । तेन ब्रह्माण्डे लोका-लोकपर्वतेऽपि किरणावच्छिन्नत्वेनोक्तदोषो यतस्तदन्तर्वर्त्तिन एवार्कर-श्मय इति ।

तद्वाक्यं च धीवृद्धिदे–

"भवति योजनमानमहर्पतिद्युतियुजो नभसः परिधेरिदम्"-इति ।

श्रीपतिरपि–

"रविगभस्तिनिरस्ततमोनभःपरिधियोजनमानमिदं भवेत्"-इति ।

व्यासिद्धान्तेऽपि–

"ब्रह्माण्डसंपुटपरिभ्रमणं समन्तादभ्यन्तरे दिनकरस्य करप्रसारः-इति ।

"ब्रह्माण्डमध्ये परिधिर्व्योमकक्षाऽभिधीयते" † ।

इति सूर्यसिद्धान्तेऽपि ।

"ब्रह्माण्डकुण्डमध्यगमिदमखिलं यत् प्रकीर्त्तितं क्रमशः ।

तस्य परिधिः स्वकक्षालोकालोकोऽपि च स उक्तः" ॥

इति लल्लेनापि स्पष्टमुक्तमित्यलम् ॥ २ ॥

इदानीं स्वमतमाह ।

**ब्रह्माण्डमेतन्मितमस्तु नो वा**
**कल्पे ग्रहः क्रामति योजनानि ।**
**यावन्ति पूर्वैरिह तत्प्रमाणं**
**प्रोक्तं खकक्षाख्यमिदं मतं नः ॥ ३ ॥**

**वा.भा.**–स्पष्टार्थम् ॥ ३ ॥

**मरीचिः**–अथ यथाश्रुतखकक्षापरिष्कारह्रपं स्वाभिमतार्थं पूर्वमतदूषणपू-

† द्रष्टव्यो भूगोलाध्याये ३० श्लोकः ।

भवेत् सप्तभक्तावशिष्टोऽर्कपूर्वः* ॥ ७ ॥

वा.भा.—स्पष्टम् ।

अत्रोपपत्तिः । रव्यब्दान्ते योऽहर्गणस्तत्र यो वारः सोऽब्दाधिपः । प्रत्यब्दं सौरदिनसंख्या षष्ट्यधिकं शतत्रयम् । तस्मिन् सप्ततष्टे त्रयोऽवशिष्यन्ते मासदिनेषु सप्ततष्टेषु द्वयमवशिष्यते । अतो गताब्दास्त्रिगुणा गताधिमासा द्विगुणास्तदैक्यं सप्ततष्टं यावद्भवति तावदेव चैत्रादेः प्रागतीते तिथिगणे सप्ततष्टेऽवशेषं स्यात् । तत् किल शुद्धितिथिषु योज्यम् । ततः पूर्वलब्धाः तयाहाः शोध्याः । तया प्रत्यब्दं पञ्च पञ्च । अतोऽब्दाः पञ्चगुणाः शोध्याः । पूर्वं त्रिगुणाः क्षेप्याः । अतो द्विगुणाः शोध्या एव । द्विगुणाः किलाधिमासाश्च योज्याः । अतो लाघवार्थमधिमासोना अब्दा द्विगुणास्तैर्लब्धावमैश्च सप्ततष्टैः शुद्धिरूना सप्ततष्टा रव्यब्दान्ते वारो भवति । स एवाब्दप इत्युपपन्नम् ॥ ७ ॥

वा.वा.—इदानीं दिनाद्येन विनाऽप्यब्दपमाह गताब्दाधिमासान्तर-

---

* गताब्दाधिमासान्तरमित्यादिना यदब्दपानयनं तत् पूर्वमेवाचार्यैः "अधोऽधस्त्रिधा" इत्यादिना कृतम् । मध्येऽत्र तदुपयोगि प्रकारान्तरेरवमाद्यमानीय पुनरब्दपानयनं पूर्वप्रकारादन्यथेति 'दिनाद्येन विनाऽपी'त्यत्र न कश्चिदन्यो गूढाशयः । प्राचीनसमये गणितगोलयोर्विषयस्य दुर्ज्ञेयत्वेऽपि व्याक्यविरचनव्युत्पत्त्याधिक्याच्च भाष्यवार्त्तिकमरीचिकाराणां तदानीन्तनानामाचार्याणां व्याख्योपपत्तय इदानीन्तनानां प्रायः शाब्दबोधरहितानां पुरतोऽवमानिता न भवेयुरतो नव्योपपत्तिरीतिमाश्रित्य तदुपपत्तिः ।

कल्पादितो गतसौरवर्षाणि = गव, गतसौरमासाः = गसौमा इत्यादिसंकेताक्षराणि संकेतचिह्नान्यपि संप्रति प्रसिद्धानीति ।

अथ गव × १२ = गसौमा,

∴ गचांमा = गसौमा + गअधिमा = गव × १२ + गअधिमा

∴ गचांदि = गव × १२ × ३० + गअधिमा × ३० + चैसिति ।

∴ गसादि = गचांदि − गवदि = गव × ३६० + गअधिमा × ३० + चैसिति − (५गव + अवमादि)

मिति । अत्र भाष्यकारः । * सौरवर्षाणि षष्ठ्यधिकशतत्रयगुणितानि सौरदिनानि भवन्ति तेषु गताधिमासास्त्रिंशद्गुणिता योज्यास्ते चान्द्रा भवन्ति । तेषु पूर्वानीतक्षयाहाः पञ्चगुणाब्दयुक्ताः शोध्यास्ते सावनाः सौरवर्षादौ भवन्ति शुद्धिश्च योज्या । ततः सप्ततष्टाः कार्याः स सौर-वर्षादौ वारो भवति । तत्रैवं कृतम् । वर्षदिनानि ३६० सप्ततष्टानि जातं त्रयम् ३ । गताधिमासगुणकीभूता त्रिंशदपि सप्ततष्टा शेषं द्वयम् २। तस्मादयमर्थो निष्पन्नः। द्विगुणगताधिमासेषु त्रिगुणवर्षाणि योज्यानि पञ्चगुणानि वर्षाणि शोध्यानि। तत्र द्विगुणगताधिमासेषु द्विगुणवर्षाण्येव शोध्यानीत्यागतम् । तत्रापि प्रथममेवान्तरं कृत्वा द्विगुणे क्रियमाणे

---

एवं तिथ्यन्ते सावना अत उदयार्थमवघट्यः शोध्यास्तदा गतवर्षान्ते विद्यमान-वर्षादौ वा सावनाहर्गणः

=गव × ३६० + गअधिमा × ३० + चैशिति−(५ गव + अवमादि )−अवघ

वारगणनार्थं सप्ततष्टोऽतोऽब्दपः

= गव × ३ + गअधिमा × २ + चैशिति − ५गव − अवमादि − अवघ

=चैशिति − अवघ−{२ ( गव − गअधिमा ) + अवमादि}

= शु − { २ ( गव − गअधिमा ) + अवमादि}

इह सर्वत्र सप्ताधिके सप्ततष्टः ।

धनर्णार्थं भाष्यवासनामरीचयोऽवलोक्या अत उपपन्नम् ।

अथ प्रकारान्तरोपपत्तिः ।

"दिनादिक्षयाहादिदिग्घ्नाब्दयोगः"-इत्यादिना

$$\frac{\text{दिश्रा} + \text{क्षया} + १० \text{ गव}}{३०} = \text{गअधिमा} + \frac{\text{शु}}{३०}$$

∴ दिश्रा + क्षया + १० गव = गअधिमा × ३० + शु = (दिश्रा + गव )+(क्षया+९ गव)

अत्र दिश्रा + गव = वप ∴ वप = गअधिमा × ३० + शु − क्षया − ९गव

रव्यादिवारार्थं सप्ततष्टः

वप = गअधिमा×२−क्षया + शु − २ गव = शु−{२ (गव − गअधिमा ) + क्षया}

पुनः सति संभवे सप्ततष्टमित्युपपन्नम् ।

* इतोऽग्रे भाष्यकारस्याभिप्राय एव न त्वानुपूर्वी भाष्यकारस्य तत्पङ्क्तिः ।

तादृशमेव भवतीति गताब्दाधिमासान्तरं द्विघ्नमित्युक्तम् । तत्राब्दानां बहुत्वाद्गताधिमासा एव तेभ्यः शोधिताः । तस्माद्विपरीतशोधनादृणमिदं शोधितम् । स्वपञ्चांशहीनाब्दाखाङ्गेन्दुभाग इत्याद्यानीतक्षयाहा अपि शोध्यत्वेनर्णगताः । अस्वयोर्योग इति गताब्दाधिमासान्तरं द्विघ्नमाद्यं क्षयाहैर्गतैरित्युक्तम् । पुनः सति संभवे सप्ततष्टम् । द्विगुणगताब्दाः सावयवेषु द्विगुणगताधिमासेषु शोध्या इति शुद्धिर्धनगतैवास्ति । द्विगुणगताधिमासा एव विपरीतशोधनेन परमृणगता जाताः । शुद्धिस्तु धनगतैव । तस्माद् "धनर्णयोरन्तरमेव योगः" इति विशुद्धं च शुद्धेरित्युक्तम् । पुनः सप्तभक्तावशिष्टोऽर्कपूर्वोऽब्दपो भवति । अथ वाऽन्यथोच्यते दिनादिक्षयाहादिदिग्घ्नाब्दयोगे खरामहृते लब्धं गताधिमासा अवशिष्टं शुद्धिसंज्ञं भवतीति प्रागभिहितम् । तत्र दिनादिस्थानेऽब्दपो यदि गृह्यते तदाऽब्दपक्षयाहादिनवघ्नाब्दयोगः खरामैर्हृतो लब्धं गताधिमासा भवन्ति शेषं च शुद्धिरिति । यतो दिनाद्यवारेष्वब्दान्वितमब्दप इति । अतो विलोमेन त्रिंशद्गुणितगताधिमासाः शुद्धियुक्ता विधेयास्तेषु नवगुणगताब्दाः पूर्वानीतक्षयाहाद्यं च शोध्यं सप्ततष्टेऽब्दपो भवति । तत्र गुणकावेव पूर्वं सप्ततष्टौ कृत्वा ताभ्यां गुणने द्विगुणागताधिमासा जाताः । नवसु सप्तोर्वरितेषु द्वयमेव गुणो भवतीति द्विगुणागताब्दाश्च भवन्ति तयोरन्तरे क्रियमाणे पूर्ववत् सर्वमुत्पद्यते । एवं सर्वत्र वासनाभिरनेकाभिः शिष्याणां कौतूहलमुत्पादयन्त्यस्मद्विधाः । अत्रास्माभिर्ग्रन्थविस्तरभयान्न लिख्यन्ते ॥ ७ ॥

मरीचिः—अथ प्रकारान्तराब्दपानयनव्याजेन पूर्वसाधितशुद्धिक्षयाहादीनामुपकरणानां शुद्धत्वज्ञानं भुजङ्गप्रयातेनाह गताब्दाधिमासान्तरमिति । कल्पगतवर्षप्रागानीतशुद्धानावगतगताधिमासयोरन्तरं द्विगुणम् । गतैः। "ये गत्यर्थास्ते ज्ञानार्थाः"-इति। पूर्वसाधनप्रकारेण ज्ञातैरित्यर्थः। क्षयाहैर्युक्तम् । ततः सप्तभक्तं फलस्य त्यागेनावशेषम् । शुद्धेरधिमासप्राप्त्यवसरे शेषादि-

त्यर्थः । अन्यथा पूर्वानीताब्दपतुल्यत्वासिद्धेः । यद्वा गतैः क्षयाहैरित्यागतक्षयाहोर्ध्वाङ्कैरेवेत्यर्थः । ननु तद्वधोऽवमघट्यादिभिरपि । पूर्ववदादिपदाभावात् । तेनावमशेषघटिकोनाधिशेषस्य दिनादेः शुद्धिपदवाच्यत्वेन यथाश्रुतशुद्धेर्ग्रहणेऽपि न क्षतिः । विशुद्धं हीनम् । यदा न शुध्यति तदा सप्तयुतशुद्धिर्याह्येति ज्ञेयम् । वर्षाधिपः स पूर्वागत एव भवेदिति । ननु यदा शेषं सप्ताधिकं तदा पूर्वतुल्यत्वं कथमत आह । सप्तभक्तावशिष्ट इति । अयं सप्तभक्तफलत्यागेन शेषितः कार्य इत्यर्थः । शेषमर्कपूर्वगणनयाऽब्दपः पूर्वागत एव स्यात् । तथा चैतत्प्रकारेण पूर्वसाधिताब्दप आयाति तदा शुद्ध्यादिकमानीतं शुद्धमन्यथा त्वशुद्धम् । एतत्प्रकारस्य तदुपजीव्यत्वादिति भावः ।

अत्रोपपत्तिः । सौरवर्षादौ कल्पात् सावनाहर्गणः सावयवः सप्ततष्टोऽब्दप इति प्राक्प्रतिपादनादहर्गणः साध्यस्तदर्थं तत्र चान्द्राहर्गणः साध्यः । तज्ज्ञाने तत्कालीनसावयवावमहीनेनाहर्गणज्ञानसम्भवात् । चान्द्राहर्गणस्तु सौरदिवस्य सावयवाधिदिनयोगरूप इति । तत्र सौरदिनज्ञानार्थं सौरवर्षाणि षष्ट्यधिकशतत्रयगुणानि । एषां शुद्ध्यानयनावसरप्राप्ताधिमासदिवसचान्द्रशुद्धियोगो योज्यः । तत्राधिमासानां सावयवत्वात् । अतोऽधिदिनार्थमधिमासास्त्रिंशद्गुणाः कार्याः । अथान्ते सप्ततष्टोऽवयवनिमित्तमहर्गणः कार्य इति पूर्वमेव लाघवाद्वर्षगुणा- ३६० धिमास- ३०गुणौ सप्ततष्टौ कृतौ ३, २ । तथा च त्रिगुणागतवर्षद्विगुणगताधिमासयोर्योगश्चान्द्रशुद्धियुक्त इति । अत्रावमानि तत्कालोत्पन्नानि हीनानि कार्याणि । तत्र सौरवर्षादौ संपूर्णदिनक्षयज्ञानाभावादेकवर्षक्षयाहोर्ध्वाङ्कत्यागेन तदेकदेशानयनस्योक्तत्वाच्च पञ्चगुणितवर्षयुक्तानीनि क्षयाहा हीनाः कार्या इति सिद्धम् । अथ त्रिगुणवर्षाणां पूर्वमेव पञ्चगुणितवर्षैः सहान्तरे गुणयोरन्तमेव लाघवाद्वर्षाणां गुणक उत्पन्नः । पञ्चगुणितशोध्यस्य शेषत्वाद्द्विगुणगतवर्षाणि ऋणमवशेषं च द्विघ्नवर्षद्विघ्नाधि-

मासयोरन्तरं कार्यमिति सिद्धेऽपि लाघवाद्गताधिमासगतवर्षयोरन्तरं द्विगुणमिति कृतं फलस्य तुल्यत्वात् । वर्षेभ्योऽधिमासानां न्यूनत्वात् सिद्धमिदमृणमवमावयवम् । अथानीतक्षयाहा अपि तदवयवत्वात् पञ्चगुणितवर्षेषु पूर्वं योजनेनर्णत्वाच्चात्र योजिताः । अथाधिमासावयवत्वात् केवलाधिशेषरूपचान्द्रशुद्धेर्योजने "धनर्णयोरन्तरमेव योगः" इति । धनशेषार्थं तदूनशुद्धिः कार्या सिद्धाब्दपपदार्थस्यानृणत्वेन धनत्वात् । पूर्वसिद्धस्यावमावयवत्वाच्छुद्धेश्चान्द्रावयवत्वाच्चावमोनचन्द्रस्य सावनत्वेन तदूनशुद्धिर्वा कार्या शेषस्याब्दपत्वेन सप्ताधिकत्वेन तष्टमिति पूर्वमेवावमावयवं सिद्धम् । शुद्ध्यधिकं चेत् सप्ततष्टं कार्यमन्यथा तदूनशुद्धिर्न स्यादिति तत् कृतम् । अत एवैतस्य सप्ततष्टेऽपि कदाचिच्छुद्ध्यधिकत्वेऽपि सप्तयोजितशुद्धेर्ग्रहणान्न क्षतिः । अथ सिद्धस्याब्दपस्य सप्ताधिकत्वसंभवेन तत् तष्टं पुनरुक्तमुपपन्नम् । गताब्दाधिमासान्तरमित्यादिश्लोकोक्तमित्यलम् ॥ ७ ॥

इदानीमवमैर्विनाऽप्यवमशेषघटिका आह ।

यत् त्वधिमासकशेषकनाडी-
पूर्वमिदं रहितं विहितं सत् ।
आद्यदिनाद्यघटीभिरथैवं
स्युः क्षयशेषभवा घटिका वा ॥ ८ ॥

वा-भा-यदधिमासशेषं तिथ्यात्मकं तस्याधो या घटिकास्ता आद्यदिनाद्यस्य घटीभिरूनाः सत्यः क्षयघटिका भवन्ति । अत्र "द्विधाऽब्दा द्विरामैः खरामैश्च भक्ताः" इत्यादिना ये दिनाद्ये फले उत्पद्येते तन्निराकरणार्थमाद्यग्रहणम् ।

अत्रोपपत्तिः सुगमा । यतो दिनावमघटिकैक्येनाधिमासशेषस्य घटिकास्ता दिनघटिकोना अवमघटिकाः । यदाऽवमघटिकोनास्तदा दिनघटिकाः स्युरिति भावः ॥ ८ ॥

**वा.वा.**–अथावमैर्विनाऽवमशेषघटिकानयनमाह यत् त्वधिमासकशेष-कोत ॥ ८ ॥

**मरीचिः**–अथानीततयाह्वाधोऽवयवस्य घट्यादित्वेन तज्ज्ञानेऽपि ग्रह-गणे केवलघट्यादेरुपयोगात् तदानयनप्राधान्येनाह यत् त्वधिमासकशेष-केति । शुद्ध्यानयनेऽधिमासप्राप्तौ यच्छेषं दिनादिकं तदधोऽवयवभूतं घट्यादि यत् स्थितम् । इदमाद्यदिनाद्यघटीभिरब्दपोपयुक्तानीतदिनाद्य-धोऽवयवरूपघट्यादिभिः । ऊनं कृतं सत् । एवमनेन प्रकारेण शेषं तयशे-षभवा घटिकाः स्युः । आनीततयाहानामधोऽवयवरूपघट्याद्यवमशेषो-त्पन्नमिति तच्छेषसंज्ञं स्यात् । वा प्रकारान्तरेण । आनीततयाहैः पूर्वं तज्ज्ञानात् । अत्र 'द्विधाऽब्दा द्विरामैः खरामैश्च भक्ताः' इत्यनेन ये दिनाद्ये फले आगते तद्वारणार्थमाद्यपदोपादानमिति ध्येयम् । "दोधकवृत्त-मिदं भभभाद्गौ *"–इति लक्षणाद् दोधकमिदं छन्दः ।

अत्रोपपत्तिः । चान्द्रसावनान्तरेऽवमानीति तद्घट्याद्योरन्तरे-ऽवमघटिका एव । अतोऽधिमासप्राप्तावमशेषस्य चान्द्रत्वेन तद्घटीनामपि तयात्वेनाङ्गीकारादब्दपयुक्तदिनाद्यस्य सावनत्वे तद्घटीनामपि तया-त्वाङ्गीकाराच्च तदूनं तत् तयशेषघट्याद्यं भवेत् । अत एव यदा हीनं तदा षष्टियुक्ताधिशेषघटीग्रहणान्न घट्याद्यानयने क्षतिः ॥ ८ ॥

इदानीं रव्यब्दान्तग्रहानयनमाह ।

कल्पजचक्रहतास्तु गताब्दाः
कल्पसमाविहृता भगणाद्याः ।
स्युर्ध्रुवका दिनकृद्भगणान्ते
पातमृदूच्चचलोच्चखगानाम् ॥ ९ ॥

**वा. भा.**–स्पष्टार्थमिदम् ।

---

* इदं वृत्तरत्नाकरे ३ अध्याये ।

अत्रोपपत्तिस्त्रैराशिकेन । यदि कल्पवर्षैः कल्पभगणा लभ्यन्ते तदा गतैः किमिति फलं रविमण्डलान्तिका ग्रहा भवन्ति । ये तत्र ग्रहास्ते ध्रुवकाः कल्पिताः । यदत्र पातमृदूच्चग्रहणं तत् तेषामतिमन्दगतित्वाद्वर्षगणेनैवानयनमुचितमिति सूचितम् ॥ ९ ॥

वा.वा.–इदानीं रव्यब्दान्ते ग्रहानयनं कल्पजचक्रहता इति ॥९॥

मरीचिः–अथ ग्रहसाधनार्थमुपयुक्तं ध्रुवकाख्योपकरणानयनं दोधकवृत्तेनाह कल्पजचक्रहता इति । कल्पगताब्दाः कल्पोक्तभगणगुणाः कल्पवर्षमानभक्ताः फलं पातमृदूच्चचलोच्चग्रहाणां यथायोग्यं दिनकृद्गणान्ते सूर्यस्य मेषादिमीनान्तात्मकभगणभोगपरिपूरणकाले 'रवेश्चक्रभोगोऽर्कवर्षम्'–इत्युक्तेर्मध्यमसौरवर्षादावित्यर्थः । भगणाद्या भगणादिविकलान्तावयवात्मका ध्रुवकाः स्युः ।

अत्रोपपत्तिः । कल्पसौरवर्षैः कल्पभगणास्तदेष्टसौरगतवर्षैः के इत्यनुपातेनोपपन्नम् । वर्षस्य सौरत्वात् तदादौ वर्षपर्यन्तग्रहसाधने एतत्फलस्योपयोगेन स्थिरत्वाद्ध्रुवका इति संज्ञा युक्ता ॥ ९ ॥

इदानीं चन्द्रध्रुवकं प्रकारान्तरेणाह ।

यत् तु दिनाद्यधिशेषमिन-१२ घ्नं
स्याद् ध्रुवकस्त्वथ वा स लवाद्यः ।
कैरविणीवनिताजनभर्त्तुः
पीतचकोरमरीचिचयस्य ॥ १० ॥

वा.भा–यदधिमासशेषं तिथ्यात्मकं तद्द्विगुणं भागात्मको विधुर्भवति ।

अत्रोपपत्तिः सुगमा । यतो द्वादशगुणास्तिथयो रवीन्द्वोरन्तरभागाः स्युः । तत्र रविः पूर्णम् । अतस्तादृगेव शशीत्युपपन्नम् ॥ १० ॥

वा.वा.-प्रकारान्तरेण चन्द्रध्रुवकमाह । यत् तु दिनाद्यधिशेषमिति । यदूनाहनाडीविहीनं न कृतं तदधिशेषमेव । शेषं स्पष्टम् ॥ १० ॥

**वा.वा.**–प्रकारान्तरेण चन्द्रध्रुवकमाह यदिति । यद्गुनाहनाडीविहीनं न कृतं तदधिशेषमेव शेषं स्पष्टम् ॥ १० ॥

**मरीचिः**–अथ दोधकवृत्तनिबद्धप्रकारान्तरेण लाघवार्थं चन्द्रध्रुवकानयनमाह यदिति । अधिमासलब्धौ यदधिशेषं दिनादि तद्द्वादशगुणम् । अथ वा प्रकारान्तरेण । स ध्रुवको लवाद्यो भागाद्यवयवात्मकः स्यात् । अयं कस्यागतोऽत आह कैरविणीत्यादि । "समे कुमुदकैरवे" इत्यभिधानात् । कैरविणी कुमुदिनी सैव वनिता स्त्री । तज्जनानां तज्जातीयानां भर्ता स्वामी । तस्य स्वविकासकाले चन्द्रोदयसद्भावाच्चन्द्रस्येत्यर्थः ।

"घनतरघनवृन्दच्छादिते व्योम्नि लोके
सवितुरथ सुधांशोः शङ्कयैव व्यरंसीत् ।
रजनिदिवसभेदं मन्दवाताः शशंसुः
कुमुदकमलगन्धानाहरन्तः क्रमेण" ॥

इत्यादिकाव्यप्रसिद्धेः । ननु के रौतीति केरवो हंसस्तस्येदं प्रियमिति क्षीरस्वाम्युक्तव्युत्पत्त्या कैरविणीति पदेन कमलिन्यपि संभवति ।

"हंसी वेत्ति परागपिञ्जरतनुः * कुत्रापि पद्माकरे
प्रेयान् मे बिसकन्दलीकिसलयं भुङ्क्ते स्वयं निर्वृतः ।
नो जानाति मनस्विनी यदधुना जम्बालमालोडयन्
शैवालाङ्कुरमप्यसौ न लभते हंसो विशीर्णच्छदः" ॥

इत्यादिकाव्ये हंसस्य कमलप्रियत्वोक्तेस्तत्पदेन सूर्योपस्थितिरपि संभवत्यतस्तद्वारणार्थमाह पीतेत्यादि । पीता आस्वादिताः । चकोरैरेतदाख्यप्रसिद्धपक्षिभिः । मरीचिचयाः किरणसमूहाः । यस्येत्यर्थाच्चन्द्रस्येत्यर्थः ।

* 'परागपङ्कलवपुः'–इति वा पाठः ।

"यस्य क्षोणिपतेर्विहायसि यशोराशौ चमत्कुर्वति
द्राक् कर्पूररजोभ्रमेण वणिजो वीथीमुपस्कुर्वते ।
चञ्चुं चञ्चलयन्ति चन्द्रकिरणभ्रान्त्या चकोराः पयो-
बुद्ध्या व्योम्नि नियोजयन्ति कलशीमाभीरवामभ्रुवः" ॥

इत्यादिकाव्योक्तेः । अथ द्वितीयोक्तावतिप्रसङ्गनिरासात् प्रथमविशेषणस्य वैयर्थ्यमिति चेन्न ।

"चुलकयसि चन्द्रदीधितिमविरलमश्नासि नूनमङ्गारान् ।
अधिकतरमुष्णमनयोः किमिह चकोरावधारयसि" ॥

इत्यादिप्रसिद्धकाव्योक्त्या चकोरैरग्निभक्षणद्वारा तत्किरणाः पीयन्त इति तत्पदेनाग्नेरपि सिद्धेरिति तन्निवारणार्थं प्रथमविशेषणावश्यकत्वात् । तथा चोभयपदविशेषोपस्थितिश्चन्द्रस्यैव नान्यस्येति भावः ।

अत्रोपपत्तिः । वर्षादौ यश्चन्द्रः स तस्य ध्रुवस्तत्र तत्साधनम् । द्वादशगुणतिथिभागयुतः सूर्य इति । तत्रापि सूर्यस्य राश्याद्यवयवाभावात् तिथयो द्वादशगुणाश्चन्द्रध्रुवकोऽशाद्यः । तिथयस्तु तत्राधिमासप्राप्तौ यदधिशेषं सावयवं दिनाद्यम् । अत उपपन्नं यत् तु दिनाद्यधिशेषमिनघ्नमित्यादि ॥ १० ॥

इदानीं कलिगतादाह ।

कलेर्गताऽब्दैरथ वा दिनाद्यं
पूर्वं यदुक्तं खलु तत् प्रसाध्यम् ।
अब्दाधिपस्तत्र सितादिकः स्याद्-
ध्रुवाश्च युक्ताः कलिवक्त्रखेटैः * ॥ ११ ॥

वा भा—स्पष्टम् ॥ ११ ॥

* वासनावार्त्तिके नृसिंहभट्टश्चर्याऽस्य श्लोकस्य नाकरोदिति ।

**मरीचिः**—अथोपजातिकया कलिगतवर्षेभ्यः पूर्वोक्तोपकरणसाधनं लाघवादाह कलेरिति । अथ वा लाघवार्थं प्रकारान्तरेण । यद्दिनादिपूर्वपदादब्दपशुद्धिचयाहग्रहध्रुवकाणां संग्रह उक्तः पश्चात् तत् सर्वमुपकरणजातं कलेर्गताब्दैः कलिसम्बन्धिगतवर्षैः पूर्वप्रकारान्तरेणैव साध्यम् । कल्पगतस्थाने कलिगतग्रहणेन यथोक्तं कार्यमित्यर्थः । अब्दाधिपे विरोधपरीहाररूपविशेषमाह अब्दाधिप इति । तत्र कलिगतसाधितोपकरणमध्येऽब्दपो य आगतः स सितादिकः शुक्रपूर्ववारगणनया स्यात् । तेन कल्पगतसाधिताब्दपेनाविरोधः । कलिगतसाधितग्रहध्रुवाणां कल्पगतसाधितग्रहध्रुवेभ्यो विसंवादादाह ध्रुवा इति । कलिगतसाधितध्रुवग्रहाणां कलिवक्रखेटैः कल्पादिस्थग्रहध्रुवैः प्राग्युक्तैर्युक्ताः सन्तराश्यादिध्रुवाः पूर्वागतसमा भवन्तीति ।

अत्रोपपत्तिः । कल्पादौ शुक्रवासरसत्त्वात् तदादिगणना । अधिशेषावमशेषाभावाल्लाघवाच्च तद्गतादुपकरणसाधनम् । ग्रहास्तु कल्पादयोत्तिताः । कल्यादौ सर्वेषां भगणपूरणाभावात् । अतः कल्यादिध्रुवैर्युक्ता आनीतध्रुवा राश्यादिका भवन्ति । भगणानां फलाभावेना प्रयोजकत्वात् तत्त्यागात् । अतः सम्यगुक्तं कलेरित्यादि ॥ ११ ॥

इदानीमहर्गणार्थं क्षेपदिनान्याह ।

स्वीयनखांशयुताः क्षयनाड्यः
क्षेपदिनानि दिवागणसिद्धौ * ।

**वा. भा.**—पूर्वमानीता ये क्षयाहास्तेषामधो यन्नाडिकाद्यं तत् स्वीयविंशांशयुतं सद्दिनाद्यं कल्प्यम् । या घटिकास्तानि दिनानि या विघटिकास्ता घटिकास्तासामप्यधो ये षष्ट्यंशास्तानि पानीयपलानि कल्प्यानीति । किमर्थम् । दिवागणसिद्धौ अहर्गणसिद्ध्यर्थम् ।

---

* एतत्पद्यार्धस्य वासनावार्त्तिकमरीचिसमाख्ये टीके अथतश्चैत्रसितादिगत इत्यादिलघ्वहर्गणानयनपद्यव्याख्यावसर एव पूर्वं निहिते द्रष्टव्ये ।

अत्रोपपत्तिः । वक्ष्यमाणेऽहर्गणानयने यदवमानयनं तत्र चतुःषष्टि-भागहारः कृतः । ततश्चान्द्राहाणां चतुःषष्ट्यैकमवमं पतति । अतो रव्य-ब्दान्ते यदवमशेषं तच्छुद्धूनासु तिथिषु स्वीयकराभ्रतुरङ्ग-७०२ लवयुतासु सदृशच्छेदं कृत्वा क्षेप्यम् । ततश्चतुःषष्ट्या भागे गृहीते लब्धमवमानी-त्युचितम् । तत्र रव्यब्दान्ते यदवमशेषं घटिकात्मकं पूर्वं गृहीतमस्ति तत् तु षष्टिच्छेदं तच्चतुःषष्टिच्छेदं कार्यम् । अतस्ता घटिकाश्चतुःषष्ट्या किल गुण्याः षष्ट्या भाज्याः । एवं चतुःषष्टिच्छेदमवमशेषं भवति । अथ चतुः-षष्टिस्थाने त्रिषष्टिरेव कृता । किमिति । तत्रोच्यते पूर्वं या अधिमासशे-षतिथय आगतास्ता एव शुद्धित्वेन ग्रहीतुं युज्यन्ते । यतस्ताभिरूनाश्चै-त्राद्यास्तिथयोऽब्दान्तादवमा गृहीता भवन्ति । अत्र च शुद्धितिथयः कार्यान्तरवशादवमघटीभिरूनाः शुद्धित्वेन परिकल्पिताः । अवमघटिको-नया शुद्ध्या यावच्चैत्राद्यास्तिथय ऊनीकृतास्तावच्छेषतिथिष्ववमशेषघटि-का अधिका जाताः । यतः शोध्यमानमृणं धनं स्यादिति । यत एकगुणा युक्ताः । अतस्त्रिषष्टिगुणा योज्याः । तत्रावमघटिकानां त्रिषष्टिर्गुणकारः षष्टिर्भागहारः । तत्र गुणकभागहारौ त्रिभिरपवर्त्तितौ । गुणकस्थाने एक-विंशति २१ भागहारस्थाने विंशतिः २० । फलं दिनानि । अत्र हराद्गुणको विंशांशाधिकोऽतः स्वीयनखांशयुताः क्षयनाड्यः क्षेपदिनानीत्युपपन्नम् ।

इदानीमहर्गणानयनमाह ।

चैत्रसितादिगतस्तिथिसंघः
शोधितशुद्धिरधस्तु समेतः ॥ १२ ॥
स्वीयकराभ्रतुरङ्ग-७०२ लवेन
क्षेपयुतः कृतषड्विभक्तः ।
लब्धदिनक्षयवर्जितशेषो
रव्युदये द्युगणोऽब्दपतेः स्यात् * ॥ १३ ॥

* चैत्रसितादीत्यनेन लब्धहर्गण आनीतः । स च वर्षान्तेष्टाहार्गणयोरन्तरेण सुगम इति तद्व्याख्या ।

**वा. भा.**—चैत्रादेर्गततिथिसंचयः शुद्धिरर्हितस्त्विष्ठः कार्यः । अन्तिमो द्विखतुरङ्गैः—७०२ भाज्यः । फलं मध्यस्थे क्षेप्यम् । ततोऽनन्तरानीतानि क्षेपदिनानि तत्र क्षिप्त्वा स राशिश्चतुःषष्ट्या भाज्यः फलमवमानि शेषमवमशेषम् । चन्द्रानयनार्थं तत् पृथगनष्टं स्थाप्यम् । अवमैरूनः प्रथमो राशिरहर्गणः स्यात् । स चाब्दपत्यादिः । यस्मिन् वारे यावतीषु घटिकासु रव्यब्दान्तो जातस्तस्मात् कालात् तदनन्तरार्कोदयं यावत्या घटिकास्ता एवाहर्गणावयवीभूताः । यतस्तासु गतास्वब्दान्तो जातोऽभूत् । तदग्रतो दिनतुल्या वारा इति बुद्धिमता गणनीयम् ।

---

$\text{वअंअह} = \text{वअंचां} - \text{वअंक्षदि} - \text{वअंक्षय}$ ।

$\text{इअह} = \text{वअंचां} + \text{इचां} - \text{वअंक्षदि} - \text{अपूअ}$ । ( अवमपूर्त्तितोऽवमः = अपूअ )

$\therefore\ \text{इअह} - \text{वअंअह} = \text{इचां} - \text{अपूअ} + \text{वअंक्षय} = \text{लअह}$

अत्र $\text{इचां} = \text{चैसितिसं} - \text{वअंअधिशे}$

$\therefore\ \text{लअह} = \text{चैसितिसं} - \text{वअंअधिशे} + \text{वअंक्षय} - \text{अपूअ}$

$= \text{चैसितिसं} - (\text{वअंअधिशे} - \text{वअंक्षय}) - \text{अपूअ}$

$= \text{चैसितिसं} - \text{शु} - \text{अपूअ} = \text{शे} - \text{अपूअ}$

इह, $\text{अपूअ} = \dfrac{\text{वअंक्षय}}{६०} + \text{इअव} = \dfrac{\text{वअंक्षय}}{६०} + \dfrac{\text{कअव} \times \text{इचां}}{\text{कचां}}$ ।

अत्र $\dfrac{\text{कअव} \times \text{इचां}}{\text{कचां}} = \text{इअव} = \dfrac{\text{इचां}}{६४} \times \dfrac{\text{कअव} \times ६४}{\text{कचां}}$ ।

अत्रापि $\dfrac{\text{कअव} \times ६४}{\text{कचां}} = \dfrac{२५०८२५५०००० \times ६४}{१६०२९९९००००००} = \dfrac{१६७२१७ \times ६४}{१०६८६६६०} = \dfrac{१०७०१८८८}{१०६८६६६०}$

$= १ + \dfrac{१५२२८}{१०६८६६६०} = १ + \dfrac{१}{७०१} + \dfrac{४८२}{१२६६}$ ।

"अर्धाधिके रूपं ग्राह्यम्"—इत्यतः $\text{इअव} = \dfrac{\text{इचां} + \dfrac{\text{इचां}}{७०२}}{६४}$

$\therefore\ \text{अपूअ} = \dfrac{\text{वअंक्षय}}{६०} + \dfrac{\text{इचां} + \dfrac{\text{इचां}}{७०२}}{६४}$

$= \dfrac{६४\dfrac{\text{वअंक्षय}}{६०} + \text{इचां} + \dfrac{\text{इचां}}{७०२}}{६४} = \dfrac{६३\dfrac{\text{वअंक्षय}}{६०} + \dfrac{\text{वअंक्षय}}{६०} + \text{इचां} + \dfrac{\text{इचां}}{७०२}}{६४}$

अत्रोपपत्तिः । अत्र चैत्रादिगततिथयः शुद्ध्यूना अतः कृत यत्नोऽधिमासशेषतिथिभिः सावयवाभिरूनीकृताः सत्यो रव्यब्दान्ताद-यतो गृहीता भवन्ति । रव्यब्दान्तादूर्ध्वमिष्टदिनोदयं यावद्द्युगणः साध्यः । अतोऽब्दान्तानन्तरार्कोदयान्तरघटीतुल्येनाहर्गणाधोऽवयवेन भवितव्यम् । अब्दान्तस्तु दिनाद्यस्य घटिकान्ते । अतः शुद्धितिथिषु सावयवास्ववमघटिका विशोध्य दिनघटिका एव शेषीकृतास्ताभिस्ति-थिभ्यः शोधिताभिरहर्गणावयवघटिका यथोक्ता भवन्ति । एवं कृतेऽव-मानयनं किञ्चित् सान्तरं स्यात् । तत् चेपदिनानयनेन निरन्तरीकृतम् । अवमानयनेऽनुपातः । यदि कल्पतिथिभिः कल्पावमानि लभ्यन्ते तदाऽऽभि-किमिति । एवमवमानि गुणश्चन्द्रदिनानि हारः । ततः संचारः । यदि चन्द्रदिनहारेणावमानि गुणस्तदा चतुःषष्ट्या किमिति । चतुःषष्ट्या गुणितानामवमानां चन्द्रदिनहृतानां लब्धं रूपम् । शेषेण शेषमपवर्तितं जातं रूपम् ! हारश्चापवर्तितो जातो द्विखशैलमितः $\frac{१}{७०२}$ । अयं गततिथीनां गुणश्चतुःषष्टिर्हरोऽतः समेतः स्वीयकराभ्रतुरङ्गलवेनेति सर्वं निर-वद्यम् ॥ १२-१३ ॥

$$= \frac{\frac{\text{२१ वअंतघ}}{\text{२०}} + \text{चैसितिसं} - \text{वअंअधिशे} + \frac{\text{वअंतघ}}{\text{६०}} + \frac{\text{इचां}}{\text{७०२}}}{\text{६४}}$$

$$= \frac{\text{चेदि} + \text{चैसितिसं} - \text{शु} + \frac{\text{इचां}}{\text{७०२}}}{\text{६४}} = \frac{\text{चेदि} + \text{शे} + \frac{\text{इचां}}{\text{७०२}}}{\text{६४}}$$

$$\therefore \text{स्वल्पान्तरात् लअ} = \text{शे} - \frac{\left(\text{चेदि} + \text{शे} + \frac{\text{शे}}{\text{७०२}}\right)}{\text{६४}}$$

अतः स्वोयनखांशेत्याद्युपपन्नपूर्वकं लघ्वहर्गणानयनं साधं पद्यं सूपपन्नम् ।

अत्रान्तिमभाज्यखण्डस्येष्टचान्द्रस्थाने श्रीमद्भास्कराचार्यैर्वर्षान्तावमघटीयुक्ते-ष्टचान्द्र एव 'शे'—इत्यभिधो गृहीतः क्रियालाघवात् । कदाचित् सूक्ष्मावयवग्रहणेना-पूर्तिस्थले पूर्णत्वादिष्टावमेस्यैकाधिकत्वेऽपीष्टवारालाभात् सैकनिरेकीकरणेन न काचि-दापत्तिरन्यन्मरीचाववलोक्यम् ।

**वा.वा.**—इदानीमहर्गणानयनमाह स्वीयनवांशयुता इति चैत्रादेः सकाशाद्रव्यब्दान्तो यावतीभिः सावयवाभिस्तिथिभिः शुद्ध्यति तास्तिथय एव सावयवाः शुद्धिशब्देनोच्यन्ते । रव्यब्दान्तादूर्ध्वमिष्टदिनोदयं यावदहर्गणोऽपेक्षितः । तस्माच्चैत्रसितादिगतस्तिथिसंघः शोधितशुद्धिः कृतः । ननु केवला शुद्धिरेव चैत्रादिगततिथिभ्यो हातुं युज्यते नावमघटिकोना । अवमघटिकोनशुद्धौ शोध्यमानायां "संशोध्यमानं स्वमृणत्वमेति स्वत्वं क्षयः" इत्यनेन केवलशुद्धूनचैत्रादितिथिषु क्षयशेषघटिका योजिता भवन्ति तच्चायुक्तमित्यत आह भाष्यकाराः "अतोऽब्दानन्तरार्कोदयान्तरघटीतुल्येनार्गणावयवेन भवितव्यम् । अब्दान्तादिष्टदिनोदयं यावदहर्गणोऽपेक्षितः । अब्दान्तस्तु दिनादिघटिकान्ते" । अत्रायमभिसंधिः । यस्मिन् दिने रव्यब्दान्तस्तस्मिन्नर्कोदयकाले कल्याद्यहर्गणः साध्यः । तस्मिन् साध्यमाने लब्धा ये दिनक्षयास्ते तु सौरवर्षाद्यर्कोदयं यावत् प्रागानीतचान्द्राणां सावनानामन्तरे भवन्ति ततस्तु रव्यब्दान्तार्कोदयात इष्टदिनोदयं यावद्यदि द्युगणः साध्यते तदा ये दिनक्षया वर्षाद्यर्कोदयकालीनावमशेषयोगेन निरवयवाः सिद्ध्यन्ति तन्मितमेव चान्द्रसावनानामन्तरं भवति । तयोरहर्गणयोर्यावद्योगः क्रियते तावत् कल्यादेरिष्टदिनोदयं यावत् कल्याद्यहर्गण एव भवति । तत्र रव्यब्दान्ताद्द्युगणानयनं चिकीर्षितमिति तत्कालीन एवाहर्गणः कर्त्तुं युज्यते । यस्मिन् दिने रव्यब्दान्तस्तदर्कोदयाद्रव्यब्दान्तपर्यन्तमब्दपघटिकाः । शुद्धेरवमघटीषु शोधितासु दिनादिघटिका एव भवन्ति । यतो दिनक्षयचान्द्रघटीनामन्तरं सावनघटिकास्तस्मात् प्रागुक्ताहर्गणप्रथमखण्डेऽब्दपघटिका योजिता जातोऽहर्गणः सौरवर्षादौ । द्वितीयखण्डे तु दिनादिघटिकाः शोध्या एव । अन्यथाऽहर्गणखण्डद्वययोगस्य कल्याद्यहर्गणतुल्यत्वं भवेत् । अतो युक्तमुक्तं भगवता भाष्यकारेण यस्मिन् दिने रव्यब्दान्तो यावतीभिर्घटीभिस्तद्दिने तत्कालादनन्तरार्कोदयं यावद्या घटिकास्ता एव लघ्वहर्गणस्य शेषभूताः । रव्यब्दान्तानन्तरार्कोदयत

इष्टदिनोदयं यावद्ये वारास्त एव लघ्वहर्गणे दिवसा इति । अथावमानयनं सावनीकरणाय । कल्पचान्द्रैः कल्पावमास्तदाऽनेन सावनशुद्धूनचैत्रसितादिगततिथिसंघेन किमिति दिनक्षयानयनम् । तत्र संचारः । यदि कल्पचान्द्रमिते हरे कल्पावमानि गुणास्तदा चतुःषष्टिमिते हरे को वा गुण इति लब्धो गुणः सावयवः १ । ० । ५ । ७ । ४२ । हरस्तु चतुःषष्टिरेव । तत्रकखण्डं रूपमितम् १ । द्वितीयमिदम् ० । ० । ५ । ७ । ४२ । कराभ्रतुरङ्गैः सवर्णितं जातमुपरि * रूपम् । अत उक्तं पृथक् च समेतः स्वीयकराभ्रतुरङ्गलवेनेति । इदं चतुःषष्टिच्छेदम् । पूर्वोक्तखण्डद्वयसाधितावमयोगेन कल्पादेरिष्टदिनोदयावधिसाधितनिरवयवावमतुल्येन भवितव्यमिति ; सौरवर्षादिजा अवमघटिकाः षष्टिभक्ता अस्मिन्नवमाद्ये योज्याः । एवं कृतेऽत्र ये निरवावमाः सिद्ध्यन्ति त एव लघ्वहर्गणे शोध्याः । तत्र सौरवर्षादौ या दिनक्षयघटिकास्ताः षष्ट्या भाज्या दिनानि भवन्ति । एतेषामवमदिनानां यदि चान्द्राः क्रियन्ते चान्द्रद्युगणे चेत् क्षिप्यन्ते ततोऽवमानयनेनापि येऽवमास्ते यथोक्तापेक्षितावमा एव भवन्तीति षष्टिभक्तावमघटिकाः चतुःषष्टिगुणिताश्चान्द्रगणे योज्याः । तत्र त्रिषष्टिगुणिता एव योजिताः । यथाऽवमानयने केवलशुद्धूनचैत्रादिचान्द्रेभ्य एवावमाः साध्यास्तत्र सावनशुद्धिशोधनादवमघटिकाः केवलशुद्धूनचैत्रादिचान्द्रेष्वाधकाः सन्ति । तस्मात् सौरवर्षादिजावमघटिकास्त्रिषष्ट्या गुणनीयाः षष्ट्या भाज्याः । तत्र गुणहरौ त्रिभिरपवर्त्य गुणस्थाने एकविंशतिः । हरस्थाने विंशतिर्जाता । यस्तु एकविंशत्या गुण्यते विंशत्या ह्रियते स स्वीयनखांशयुक्त एव भवति । अतः क्षेपयुतः कृतषड्विभक्त इत्यादिशोधनमुक्तम् । अत्र चतुःषष्ट्या गुणनं स्थूलमपि क्षेपे स्वीकृतं स्वल्पान्तरत्वात् । न हि चतुःषष्टिचान्द्राणामेकोऽवमो भवति "रुद्रांशकोनाब्धिरसैः क्षयाह"-इति

* द्विखतुरङ्गैर्गुणनेन पुनरन्त्याङ्कतः षष्टिलब्धिग्रहणादादावेकोनषट्त्रिंशच्छतपलानि ततो दिनकरणाद्रूपमिति ।

गोले * प्रतिपादितत्वात् । इतः प्रभृत्यामध्यमाधिकारान्तं भाष्यं सुगमं किन्तु कुत्र चिद्विशेषार्थमुच्यते ॥ १२-१३ ॥

**मरीचिः**—अथ क्षेपदिनाख्योपकरणपूर्वकं लघ्वहर्गणानयनं दोधकद्वयेनाह स्वीयनखांशयुता इति । क्षयनाम्नः पूर्वज्ञाताः क्षयाहाद्यधोऽत्रयरूपाः स्वीयनखांशयुताः स्वविंशत्यंशेन युताः सत्यः । क्षेपदिनानि सावयवानि भवन्ति । एषां प्रयोजनमाह दिवागणसिद्धौ इति । अहर्गणज्ञानार्थमेतेषां प्रयोजनम् । इदमुपलक्षणम् । पूर्वानीतोपकरणान्यपि तज्ज्ञानार्थमुपयुक्तानि ।

अथाहर्गणानयनमाह चैत्रेति । स्वेष्टकालेऽव्यवहितचैत्रशुक्लपक्षादिरूपप्रतिपदो गतस्तिथिगणो मासादिपरिभाषया ग्राह्यः । अयम् । शोधिता शुद्धिर्यस्मिन्निति शोधितशुद्धिः । प्राक्साधिताधमघट्यूनाधिशेषदिनादिरूपशुद्धिहीनः । अयं सिद्धोऽधः कर्मभूमौ पृथक् स्थाप्यः । "त्वन्त्यादि न पूर्वभाक्" † इत्युक्तेनाधःपदस्योत्तरत्रान्वयादयमधःस्थः स्वीयकराभ्रतुरङ्गलवेन । स्वद्व्यधिकसप्तशतांशेन समेतो युक्तः । अयमधस्थः सिद्धः क्षेपयुतः पूर्वानीतक्षेपदिनयुतः । अयं सिद्धश्चतुःषष्टिभक्तो लब्धदिनक्षयवर्जितशेषः । भागादाप्तावमैर्हीन ऊर्ध्वस्थः । तस्य शेषोऽवशिष्टाङ्क इत्यर्थः । अयं सिद्धोऽङ्को द्युगणोऽहर्गणो मध्यमसूर्योदयासन्नकालेऽभीष्टे भवेत् । अत्रापि चतुःषष्ट्याऽवशेषाद्घट्यादि न ग्राह्यम् । दिनक्षयशेषत इत्याद्युक्तेः । नन्वयमहर्गणः कल्पाद्यहर्गणेन कल्याद्यहर्गणेन वा तुल्यः स्यादत आह । अब्दपतेरिति । पूर्वानीतसावयवाब्दपतेर्ज्ञातकालमवधीकृत्यायमागतः । तथा च यथा कल्पादिकल्याद्यहर्गणयोरतुल्यत्वं तथैव तस्यापि भिन्नत्वमिति भावः । एतेनागताहर्गणे पूर्वनीताब्दपः सावयवो यथायोग्यं योज्यः सिद्धोऽङ्को निरवयवः सप्त-

* गोलाध्याये इति ।

† शब्दानुशासनेऽमरकृतः संकेतस्तदन्यस्यवाक्यार्थमेवेति विवेचनीयम् ।

नष्टः शेषं सूर्यादिगतवारा भवत्युक्तगणनया वर्त्तमानवारज्ञानं स्यादिति सूचितम् ।

अत्रोपपत्तिः । अहर्गणपदवाच्यत्वं सावनदिनगण इति । पूर्वं कल्पाद्यदीष्टसूर्योदयसावनदिनगण आनीत इदानीमतिलाघवार्थं वर्षादितो वर्षमध्येऽहर्गणो लघुरानेयः । कल्पाद्यहर्गणवत् । वर्षादिग्रहाणां सिद्धत्वात् । तदग्रे ग्रहज्ञानार्थं तदादितः सावनाहर्गणस्योपयोगात् । तदानयनं तु वर्षादिकालेऽनुपातेन सावयवाहर्गणं कृत्वेष्टसूर्योदयेऽपि उक्तप्रकारेण कल्पाद्यहर्गणं कृत्वा तदन्तरं सावयवोऽहर्गण इति गौरवं विहाय लाघवादन्यथा यतितम् । तत्रेष्टसूर्योदयकाले सौरवर्षादितः सावनदिनानि ज्ञातव्यानि । एतज्ज्ञानं तदादितश्चान्द्रज्ञानेनावमद्वारा सुगममिति । पूर्वप्रतिपादनात् । प्रथमं तदादितश्चान्द्रदिवसा ज्ञेयाः । एतज्ज्ञानस्याप्यभावात् प्रथमं चान्द्रवर्षादिरूपचैत्रप्रारम्भकालान्मासतिथिज्ञानसम्भवात् संपूर्णास्तिथयो गताः । चान्द्राहर्गणः स्वसूर्योदयप्राक्कालीनतिथ्यन्तकाले चैत्रादितो ज्ञातस्तिथिग्रहणात् । अपेक्षितः सौरवर्षादित इति । चैत्रादिसौरवर्षाद्यन्तररूपचान्द्रदिनैरूनः कार्यः । तत्र शुद्धिस्तदन्तरत्वेन पूर्वप्रतिपादनादानीतशुद्ध्योऽत उक्तं 'चैत्रसितादिगतस्तिथिसङ्घः शोधितशुद्धिः' इति । ननु चान्द्रवर्षादिसौरवर्षाद्यन्तरचान्द्रदिनानां दिनाधिशेषरूपत्वात् । अवमघट्यूनदिनाद्यधिशेषरूपशुद्धित्वाभावाच्च शोधितशुद्धिरिति कथमुक्तम् । अन्यथा तदादिचान्द्रे तदवमघटीतुल्यमधिकं स्यात् । शोध्ये न्यूनत्वात् । सौरवर्षादित इष्टतिथ्यारम्भकाले वस्तुभूतचान्द्रत्वासिद्धिरिति चेत् । उच्यते । वास्तवचान्द्राणां तदानीतसावयवावमहीनानां तिथ्यन्तकाले तदादिसावनत्वं स्यादिति भवतामप्यभिमतम् । तत्र सूर्योदयकालकरणार्थमवमशेषघट्यादितिथ्यन्तकालीनं योज्यम् । एतत्कालीनावमशेषं तु इष्टचान्द्रानीतावमाधोऽवयवघट्यादियोगः षष्टितष्ट इति रूपम् । तथा च सौरवर्षादितः सावनज्ञानार्थमिष्टचान्द्रानीतावमाधोऽवयवस्य

संपूर्णावमशेषैकदेशस्येष्टचान्द्रे न्यूनत्वं कार्यं सूर्योदयकालीनकरणार्थं संपूर्णावमशेषयुक्तरूपं योज्यमिति सिद्धम् । तत्रेष्टचान्द्रानीतावमानां सावयवानामवास्तवानां वास्तवावमानामधिकानां चान्तरं सौरवर्षावमशेषमधिकं तद्योज्यमिति पूर्वमेवेष्टचान्द्राणां योजितं कृतमित्यवमानयने स्पष्टमिति न क्षतिः । अत एवावमघट्यूनदिनाद्यधिशेषस्य चैत्राद्युत्तरसूर्योदयसौरवर्षाद्यन्तरकालस्य शोध्यत्वेन शुद्धिरिति संज्ञा सम्यगुक्ता । अथ सावनार्थं दिनगणाः साध्याः । कल्पचान्द्रैः कल्पदिनगणास्तदेष्टैः किमित्यनुपातेन । तत्र कल्पावमरूपगुणस्य खण्डद्वयम् । एकं पञ्चाद्रिरामाङ्केषुगजरसाब्धिखतत्त्वमितम् २५०४६८५९३७५ । अपरं च तत्त्वरसखगोषट्पञ्चरामप्रमितम् ३५६९०६२५ । प्रत्येकं कल्पचान्द्रा हरश्च । प्रथमस्थाने गुणहरौ गुणेनापवर्त्य हरस्थाने चतुःषष्टिः । द्वितीयस्थाने गुणहरौ तत्त्वेन्दुगजाश्विमितैः—२८१२५ रपवर्त्तितौ गुणस्थाने नवरससूर्याः १२६९ । हरस्थाने नखपञ्चेषुनवनन्दरसशरमिताः ५६९९५५२० । तथा च चतुःषष्टिभक्तचान्द्राणां द्वितीयस्थानोत्पन्नगुणाः १२६९ । गुणितचान्द्राणां द्वितीयस्थानोत्पन्नहरभागो योज्य इति सिद्धम् । तत्र लाघवार्थं गुणितस्य हरभागस्तदा चतुःषष्टिभक्तस्य को भाग इति लब्धांशः किञ्चिन्न्यूनः ७०१ । ४७ । अत्रान्तराभावदर्शनात् स्वल्पान्तराद्वा द्विमितो धृतस्तेन चतुःषष्टिभक्तचान्द्राः स्वाधिकसप्तशतां—७०२ शेन योज्या दिनगणाः स्युरिति सिद्धम् । तत्रापि भाज्य एव स्वद्व्यधिकसप्तशतांशेनाधिके कृते चतुःषष्टिभक्ते फलस्य तुल्यत्वात् तदेव कृतम् । अत उक्तम् । 'अधस्तु समेतः स्वीयकराभ्रतुरङ्गलवेन' इति । न च वास्तवचान्द्रेषु सौरवर्षाद्यवमघट्यादीनामधिकत्वात् तदंशेन योजने घटीनामपि स्वद्व्यधिकसप्तशतांशोऽधिकमन्तरं स्यात् । अवमानयनार्थं शुद्धाश्चान्द्रा एवापेक्षितास्तस्मादहर्गणार्थं शुद्ध्यनास्तिथ्योऽवमानयनार्थमधिशेषदिनाद्यूनास्त एव स्वद्व्यधिकसप्तशतांशेन योज्या इति युक्तमिति वाच्यम् । पृथग्विधयोर्गौरवात् तत्त्यागात् । लाघवात् स्वल्पान्त-

रान्च अवमघटीयुतचान्द्राणामवमानयनेऽप्यङ्गीकारात् । अत एव न्यून फलार्थमिवाधिकांशयोजनं स्वल्पान्तरेण कृतम् । किञ्च । अवमाधोऽवयवे प्राणाः षष्ट्यंशादावन्तरपातेनाग्रेऽवमशेषत्यागाच्चाहर्गणसिद्धौ न क्षतिः । न चैवमत्र स्वीयकराभ्रतुरङ्गलवयोजनं व्यर्थमिति वाच्यम् । अवमाधोऽवयवे घट्यादिकेऽन्तरपातेनाग्रेऽवमशेषाच्चन्द्रसाधने चन्द्रस्य बह्वन्तरत्वापत्तेः। अथैषां वास्तवत्वाभावेन सौरवर्षाद्यवमघट्यादिहीनम् । ततः सिद्धं चतुःषष्टिभक्तं कार्यं फलं सावयवदिनक्षयाः सौरवर्षादितः इष्टतिथ्यारम्भकाले । एतैर्वास्तवाश्चान्द्रा हीनास्तिथ्यारम्भकालेऽहर्गणः । अथ सूर्योदयकालीनसाधनार्थं कल्पादितोऽव्यवहितपतितावमान्तकालादवशेषाद्घट्यादि यत् तद्योज्यम् । तिथ्यन्तसूर्योदयान्तरकालस्य संपूर्णवास्तवावमशेषत्वादिति । एतज्ज्ञानं तु अहर्गणोपयुक्तसावयवावमसौरवर्षाद्यवमघटिकायोगस्याधोऽवयवज्ञानेन तस्मादवमान्तादवमानयनार्थमिष्टचान्द्रा वास्तवाः सौरवर्षादितोऽव्यवहितावमान्तपातकालात् साध्याः । चतुःषष्टिभक्ता दिनक्षयाः सावयवाः पूर्वयोगरूपा भवन्तीति सौरवर्षाद्यमवघटीयुतेष्टचान्द्राणां स्वद्व्यधिकसप्तशतांशाधिकानां क्षेपदिनयोजनेन तादृशाश्चान्द्रा भवन्तीत्यत उक्तं क्षेपयुत इति ।

अथ क्षेपोपपत्तिं विना एतदुक्तस्यानिश्चयात् तदुत्पत्तिं शृणु । सौरवर्षाद्यमवघटिका अहर्गणोपयुक्तावमाधोऽवयवे योज्याः । तत्र चान्द्रे लाघवाद्योजनार्थं समच्छेदं विना तुल्यजातित्वाभावेन योगकरणेऽशक्यत्वात् । समच्छेदार्थं चतुःषष्टिगुणोऽवघटिकानां हराभावादविकारेणैव रूपहरकल्पनादिति चान्द्रा अविकृता एव । एतेनात्र चतुःषष्ट्या गुणनं स्थूलमपि स्वीकृतं स्वल्पान्तरात् । न हि चतुःषष्टिचान्द्राणामेकोऽवमो भवति "रुद्रांशकोनाब्धिरसैः क्षयाहः" इत्युक्तेरिति निरस्तम् । अवमपूरणचान्द्रत्वेन तद्गणनाप्रसङ्गात् । अवमघटीनां भिन्नजातित्वेन चान्द्रदिने योगासम्भवाद्दिनस्यानकरणार्थे

षष्टिर्हरस्तासां कल्पितः । अथैतास्तत्र योज्या अवमानयनार्थं शुद्धाश्चान्द्रा अपेक्षिता इति । तत्रावमघट्यादि सैारवर्षादिजमूनं कार्यमतो लाघवात् सैारवर्षाद्यवमघटीनां त्रिषष्टिरेव गुणः कृतः । ननु स्वीयकराभ्रतुरङ्गलवयोजनेनेष्टचान्द्राणां मध्ये स्वद्व्यधिकसप्तशतांशाधिकावमघटीनामधिकत्वादवमघटीकराभ्रतुरङ्गलवाधिकैकेन चतुःषष्टिर्गुणो हीनः कार्यः । अतस्तासां त्रिषष्टिर्गुणः कथम् । न च क्षेपयोजनानन्तरमिष्टचान्द्राणामुक्तांशयोजनं व्यस्तव्याख्यानात् । तेनैक एव हीन इति त्रिषष्टिर्गुणो युक्तः । अत एवेष्टचान्द्राणां स्वल्पान्तरेण वास्तवत्वमिति प्रागुक्तमयुक्तम् । मदुक्तव्याख्यानेन तदंशयोजनावसरे वास्तवचान्द्राणां ज्ञानादिति वाच्यम् । एवमपि समच्छेदार्थं किञ्चिदूनचतुःषष्टिगुणत्वापत्तेः । न तु संपूर्णस्य इष्टचान्द्राणां स्वद्व्यभ्रागांशहीनचतुःषष्टेर्हरत्वात् । तदंशयोजनाभावेन संपूर्णचतुःषष्टेर्हरत्वाभावादिति चेन्न । अवमघट्यादितदंशस्य स्वल्पत्त्वेनाङ्गीकार इत्यादेः पूर्वमेवोक्तत्वात् । तथा चावमघट्यः षष्टिभक्तास्त्रिषष्टिगुणाः कार्यास्तत्र गुणस्य खण्डद्वयम् । एकं षष्टिमितं परं त्रिमितम् । प्रत्येकं षष्टिमितो हरश्च । प्रथमस्थाने गुणहरयोस्तुल्यत्वान्नाशादवमघट्याद्येव फलम् । द्वितीयस्थाने गुणहरौ गुणेनापवर्त्य हरस्थाने विंशतिस्तेन घटीनां विंशत्यंशफलतद्योगः क्षेपदिनसंज्ञः । इष्टचान्द्रे क्षेप्यत्वादत उक्तं 'स्वीयनखांशयुताः क्षयनाड्यः क्षेपदिनानि दिवागणसिद्धै '-इति । अथैते शुद्धाश्चान्द्राश्चतुःषष्टिभक्ताः सैारवर्षादितोऽव्यवहितपूर्वपतितावमान्तकालाद्दिनक्षयाः सावयवा भवन्ति । एते सैारवर्षाद्यवमघट्यादिभिरूना अहर्गणोपयुक्तसैारवर्षादितिथ्यन्तकालजदिनक्षयाः सावयवा भवन्ति । एत एव चान्द्राहर्गणे हीनास्तिथ्यन्ते सावनाहर्गणो भवति । सूर्योदयासन्नकाले करणार्थं पूर्वानीतावमाधोऽवयवो योज्यः । तत्र यदाऽहर्गणोपयुक्तावमाधोऽवयवात् संपूर्णावमाधोऽवयवोऽधिकस्तदोर्ध्वाङ्कसमत्वेनाधोऽवयवान्तरमेव सैारवर्षा-

द्यवमघट्यादिरूपम् । तद्योज्यमूर्ध्वाङ्कदिनतया हीनास्तथा चेष्टचान्द्रे पूर्वमेव सौरवर्षाद्यवमघट्योऽधिकाः कृताः । इदानीमूर्ध्वाङ्कवियोजनमिति निरग्रदिनतया हीनाः कार्या इति सिद्धम् । यदा चाहर्गणोपयुक्तावमाधोऽवयवात् संपूर्णावमाधोऽवयवो न्यूनस्तदाऽधोऽवयवान्तरं पष्टिशुद्ध-सौरवर्षाद्यवमघटीतुल्यं हीनं कार्यम् । अहर्गणोपयुक्तावमोर्ध्वाङ्कात् संपूर्णावमोर्ध्वाङ्को रूपेणाधिक इति रूपोनः कार्यः । तादृशश्चान्द्रो हीनः कार्यः । अहर्गणार्थं तादृशस्य हीनकरणोत्पत्तेः । तत्र लाघवात् संपूर्णावमोर्ध्वाङ्को हीनः कृतः । एवं सति सौरवर्षाद्यवमघट्योऽधिका न्यूनाः कृता इति ता योज्या अतस्ता इष्टचान्द्रे पूर्वमेव योजिताः । अत एव सौरवर्षाद्यवमघट्याद्यूनाधिशेषदिनरूपशुद्धिः शोधितेति पूर्वं प्रतिपादितम् । तथा च क्षेपयोजनेन ये शुद्धाश्चान्द्रास्तेषां चतुःषष्टि-भागेन निरवयवेनोर्ध्वस्था अवमघटीयुतेष्टचान्द्रा हीनाः सूर्योदयासन्न-काले पूर्वरीत्याऽहर्गणः स्यात् । अवमशेषं च चन्द्रसाधनार्थमनष्टं स्थाप्यम् । न तस्माद्घट्यादिफलं ग्राह्यं प्रयोजनाभावात् । अयमहर्गणः सौरवर्षादित इष्टसूर्योदयासन्नकाले जात इत्यब्दपघट्यादिकाले न तदादिज्ञानादब्दपतेरित्युक्तम् । अत एवाहर्गणाधोऽवयवः सौरवर्षाद्यन-न्तरसूर्योदयासन्नकालान्तरमाव्रनघट्यात्मकाब्दपभोग्यघटीरूपः सिद्धः । अतः माधवाब्दपयोजनेन निरवयवोऽयं सप्ततष्टः शेषं सूर्याद्गतवारो भवतीति सर्वं समञ्जसम् । एकदेशिनस्तु अवमानयनार्थमधिशेषदिना-द्यूनचैत्रादितिथिगणरूपः शुद्धश्चान्द्राहर्गणो ग्राह्यस्तेनांशयोजनेऽप्यन्तरा-भावादयुक्तम् । अथ सौरवर्षाद्यवमघटीनां चतुःषष्टिरेव गुणो न त्रिषष्टिः । पूर्वमवमानयनार्थमिष्टचान्द्राणां वास्तवत्वेन सौरवर्षाद्यव-मघट्यादेस्तत्राभावात् । तेनोक्तरीत्याऽवमघट्यः स्वपञ्चदशांशयुताः क्षेपदिनानीति सिद्धमतो नखांशेत्यत्र दिनांशेति युक्तः पाठस्ततो निरग्रदिनतया सौरवर्षाद्यवमघटीयुतेष्टचान्द्रेषु हीना इति युक्तम् ।

तस्माच्छुद्धूनचैत्रादितिथिगणं कृत्वाऽथः सौरवर्षाद्यमघटीभिर्हीनमिति ज्ञेयस्त्वर्थ इति वदन्ति तत्र स्वीयकराभ्रतुरङ्गलवयोजनान्तरं सौरवर्षाद्यमघटीतदंशेन हीनमित्येव त्वर्थसिद्धेः पाठकल्पनस्यान्याय्यत्वात् ॥१३॥

इदानीं विशेषमाह ।

**यावत् तिथिभ्योऽभ्यधिकाऽत्र शुद्धिः**
**प्राक्चैत्रतस्तावदहर्गणः स्यात् ।**
**प्राक्शुद्धिपूर्वेण तथैव खेटाः**
**प्राग्वर्षजातैर्ध्रुवकैः समेताः ॥ १४ ॥**

**वा. भा.**—यत्र यावच्चैत्रादितिथिभ्यः शुद्धिर्न शुध्यति तावत् पाश्चात्यचैत्रादेराभ्य तिथीर्गणयित्वा पूर्ववर्षभवैः शुद्ध्यब्दपत्रैरहर्गणः साध्यः । तस्मादागता ग्रहाः पूर्ववर्षध्रुवकैश्च युताः कार्याः । यतो ह्यब्दादेरहर्गणस्यान्यत्र्यब्दान्तं यावदुपचय इयमेवात्र वासना ॥ २४ ॥

**मरीचिः**-ननु चैत्रादितिथिगणे शुद्धिरूना न स्यात् तदा लघ्वहर्गणः कथं साध्य इत्यतो विशेषमिन्द्रवज्रयाऽऽह यावदिति । अत्र लघ्वहर्गणानयने तिथिभ्यश्चैत्रादितिथिभ्यः शुद्धिरधिका यावत् यत्कालपर्यन्तं स्यात् तावत् तत्कालपर्यन्तम् । इष्टकाले ज्ञातचैत्रादितिथिषु शुद्धेर्हीनत्वेनाहर्गणसिद्धेः । प्राक्चैत्रतः पूर्ववर्षाद्यासन्नचैत्रशुक्लादित इष्टकालपर्यन्त तिथिगणं गृहीत्वा प्राक्शुद्धिपूर्वेण पूर्ववर्षोत्पन्नशुद्ध्याद्युपकरणैरित्यर्थः । उक्तरीत्याऽहर्गणः स्यादिति नासिद्धिः । नन्वस्माद्ग्रहानयने स्वासन्नवर्षादिसंभूतग्रहध्रुवकयोजनेन च सिद्धत्वग्रहस्य तदहर्गणानीतग्रहेण विसंवादादतो ग्रहानयने विशेषमाह तथेति । यथा पूर्वचैत्रात् पूर्वशुद्ध्यादिभिरहर्गणः साधितस्तथेत्यर्थः । खेटा एतदहर्गणोत्पन्नाः सूर्योदये वक्ष्यमाणानयनात् प्राग्वर्षजातैः पूर्वसौरवर्षादिकाले 'कल्पजचक्र' इत्याद्युक्तप्रकारेण सिद्धैर्ध्रुवकैः । एवकार इष्टकालासन्नवर्षादिग्रहध्रुवकानिवारणार्थो युक्तः । तथा च संवाद इति न क्षतिः ।

अत्रोपपत्तिः । अयमहर्गणः सौरवर्षादितदन्तरूपद्वितीयसौरवर्षा द्योरन्तरकालावच्छिन्नेष्टकाले साधित इति प्रतिपादनाद्यदा चैत्रादितिथिगणे शुद्धेर्हीनत्वं तदा चैत्रादितिथीनां शुद्धिकालान्तर्गतत्वेन चैत्रप्रारम्भेऽपि पूर्वसौरवर्षसमाप्त्यभावाच्चैत्रादितः शुद्धिदिनैरग्रे सौरवर्षसमाप्तेः सिद्धत्वाच्च । पूर्वचैत्रात् पूर्वशुद्ध्यादिनाऽहर्गणानयनं युक्तम् । अन्यथोक्तरूपाहर्गणस्यासिद्धत्वापत्तेः । अत एव तत्राहर्गणानीतग्रहाः पूर्वध्रुवैर्युक्ताः पूर्वध्रुवसम्बन्धिकालादहर्गणस्यागतत्वादत उक्तमुपपन्नं यावदित्यादि । ननु "यत्र क्वचिच्छुद्धिविधौ यदेह"—इत्यादित्रिप्रश्नाधिकारोक्तविधिना तदा शुद्धिरेव तिथिगणोना । शेषमधः स्वकराभ्रतुरङ्गलवयुतम् । सौरवर्षाद्यवमघट्यादितदंशेन युतम् । ततः क्षेपदिनेभ्यः शोध्यम् । यदा न शुद्ध्यति तदा चतुःषष्टियुतक्षेपदिनेभ्यः शोध्यम् । ततश्चतुःषष्टिभक्तं फलेन निरवयवेनाधःस्थशेषं हीनमभीष्टदिनसूर्योदये सौरवर्षान्ताद्विपरीताहर्गणो भवतीति पूर्वक्रियातोऽत्र विपरीतत्वात् । एतदुत्पन्नो ग्रहः स्वध्रुवेषु शोध्यः पूर्वागतमध्यग्रहो भवतीति प्रकारस्योक्तप्रायत्वादुक्तविशेषाभिधानं गौरवम् । एतत्प्रकारानीतगणान्मूलोक्तप्रकारानीतगणस्यातिमहत्त्वेन गौरवाच्च । अत एव

"यावन्न मेषं व्रजति प्रभाकरस्तावच्च पूर्वध्रुवकान् परित्यजेत् ।
चैत्रे प्रविष्टेऽपि विलोमकर्म वा शुद्ध्या विजह्यादगते क्रियं रवौ ॥
भास्वान्नृणाहर्गणतश्च सिद्धः पात्यो भचक्रात् स्वफलानि चैवम् ।
स्वस्वध्रुवादप्यथ खेचराणां शोध्यानि यस्मात् प्रवदन्ति सन्तः" ॥

इत्यनेन स्पष्टं पूर्वप्रकारस्य गौरवं लल्लेनाभिहितम् । तस्मात् पूर्ववर्षीयोपकरणात् पूर्वचैत्रानपेक्षेण लाघवादानीतोपकरणे तच्चैत्रादितिथिगणद्वारा सिद्धेराचार्योक्तं व्यर्थमिति चेन्न । विपरीतकर्मणि योगेतरत्वप्रतिपादनेन क्षेपयुत इत्यत्रैव विपरीतकर्मान्तसिद्धेरहर्गणोत्पन्नग्रहो ध्रुवेषु हीन इत्याद्यनुपपत्तेश्चतुःषष्टियुतक्षेपदिनविशेषकथनापत्तेश्चेति

तदनपेक्षणादुक्तप्रकारेणैव सिद्धिरिति लाघवदर्शनात् स्वरूपनिर्वाहात् स्वेच्छयैव वा तदङ्गीकारात् ॥ १४ ॥

इदानीं रव्यानयनमाह ।

दिनगणो निजषष्टिलवोनितो
भवति तिग्मरुचिः स लवादिकः ।
गुणगुणाद् द्युगणादथ भाजिताद्
यमयमैः २२ कलिकादिफलान्वितः ॥ १५ ॥

वा. भा.—अत्रोपपत्तिः । अत्र बालावबोधार्थं रूपमहर्गणं कृत्वा ग्रहाणां दिनगतयः साधिताः ।

| | | | | | | | | |
|---|---|---|---|---|---|---|---|---|
| र | चं | मं | बु | गु | शु | श | उं | पा |
| ० | १३ | ० | ४ | ० | १ | ० | ० | ० |
| ५९ | १० | ३१ | ५ | ४ | ३६ | २ | ६ | ३ |
| ८ | ३४ | २६ | ३२ | ५९ | ७ | ० | ४० | १० |
| १० | ५३ | २८ | १८ | ९ | ४४ | २२ | ५३ | ४८ |
| २१ | ० | ७ | २८ | ९ | ३५ | ५१ | ५६ | २० |

दिनगणः स्वषष्ट्यंशोनो भागा इति प्रत्यहमेकोनषष्टिः कला गृहीताः । शेषावयवेन सत्रिभागैः सप्तभिर्दिनैरेका कला भवति । अतो गुणगुणाद् द्युगणाद्यमयमैर्भाजितादित्युपपन्नम् ॥ १५ ॥

मरीचिः—अथातो ग्रहानयनं विवक्षुः प्रथमं सूर्यानयनं द्रुतविलम्बितेनाह दिनगण इति । तिग्मरुचिरित्युपलक्षणेन भौमगुरुशनीनां शीघ्रोच्च सूर्यबुधशुक्राश्च भवन्तीत्यर्थः । अन्यत् सर्वं स्पष्टार्थम् ।

अत्रोपपत्तिः । यदि कल्पकुदिनैः सूर्यभगणांशा-१५५५२०००००००० तदेष्टाहर्गणेन क इत्यनुपातेन गुण—१५५५२००००००० हरौ १५७७९१६४५०००० अयुतघ्नशराभ्राब्धिमिते—४०५०००० रपवर्तितौ जाता-

बहर्गणस्य सूर्यांशादिज्ञानार्थं गुण-३८४००० हरौ ३८९९६०९ । तत्र गुणनार्थं गुणस्य सहस्रघ्नवेदाष्टराममितस्य खण्डद्वयम् । एकमधोऽवयवैकत्रिंशद्युतपञ्चेशरामाष्टराममितम् ३८३११५ । ३१ । द्वितीयमेकोनत्रिंशदधोऽवयवयुतवेदाष्टाष्टमितम् ८८४ । २९ । प्रत्येकं तदधो हरश्च गोखरसनवाष्टराममितः ३८९९६९ । तत्रापि प्रथमस्थाने गुण-३८३११५।३१ हरौ ३८९९६०९ । एकोनत्रिंशदधोऽवयवयुतत्रिनन्दवेदाङ्कमितै ६४९३ । २९ रपवर्तितौ जातावेकोनषष्टिमितगुण—५९ षष्टिमितहरौ ६० । तथा चात्रोक्तरीत्याऽहर्गणः स्वषांष्ट्यंशहीन इति सिद्धम् । द्वितीयस्थाने तु लाघवात् कलात्मकफलानयनार्थं गुणोऽय—८८४।२९ मेकस्थः ५३०६९ । एतादृशगुण—५३०६९ पूर्वसिद्धहरौ—३८९९६०९ चत्वारिंशदधोऽवयवयुतनवाष्टाङ्कात्यष्टिभि- १७६८९।४० रपवर्त्तितौ गुणस्थाने त्रयो हरस्थाने द्वाविंशतिः किञ्चिदधोऽवयवयुता । तत्र लाघवार्थं वर्षान्तःपात्यहर्गणद्वारा ग्रहसाधनेन विकलान्तावयवेतराभावदर्शनाच्च हरस्थानेऽधोऽवयवत्यागाद्द्वाविंशतिरेव गृहीताऽतोऽहगर्णस्त्रिगुणो द्वाविंशतिभक्तः फलं कलासु खण्डत्वाद्योज्यम् । सूर्यतुल्याविव बुधशुक्रौ भगणैक्यत्वात् । अयं सूर्यो वर्षादित इष्टकाले इति तत्सिद्धध्रुवकयुतः कार्योऽपि तत्र सूर्यध्रुवकानयने भगणपूर्त्तिदर्शनेन राश्यादिध्रुवकाभावेन शून्यमितयोजने न विकार इति यथागतमेव फलं सूर्य इति सम्यक् । अत उपपन्नं दिनगण इत्यादिपद्योक्तम् ॥ १५ ॥

अथ चन्द्रानयनमाह ।

रविगुणैस्तिथिभिः पृथगुष्णगु-
लवगतः सहितः स हिमद्युतिः ।
स्वनगभागयुतेन दशाहत-
क्षयदिनोर्वरितेन कलान्वितः ॥ १६ ॥

**वा. भा.**-स रविः पृथक् । रविगुणतिथितुल्यैर्भागैः सहितै हिमद्युतिर्भवतीति प्रसिद्धा वासना । परमेवं लिख्यन्ते । अथ चोद

यिकः कार्यः । तिथ्यान्तार्कोदययोर्मध्येऽवमशेषम् । तत् सावनम् । तस्य चान्द्रीकरणायानुपातः । यदि त्रिषष्ट्या सावनैश्चतुःषष्टितिथय-स्तदाऽवमशेषान्तःपातिभिः सावनावयवैः किमिति । पूर्वमवमशेषस्य चतुःषष्टिश्छेद इदानीं गुणस्तुल्यत्वात् तयोर्नाशे कृते त्रिषष्टिरेव हरः । फलं तिथ्यात्मकम् । तद्द्वादशगुणं किल भागाः । पुनः षष्टिगुणं कलाः । एवं द्विसप्ततिर्दशगुणाऽवमशेषस्य गुणस्त्रिषष्टिर्हरः । हरगुणौ नवभिरपवर्त्तितौ । हरस्थाने जाताः सप्त ७ गुणस्थानेऽष्टौ दशगुणाः ८० । यो राशिरष्टभिर्गुणितः सप्तभिर्ह्रियते स स्वसप्तमांशेनाधिकः कृतो भवति । अत उक्तं स्वनगभागयुतेन दशाहतत्वयदिनोर्वरितेन कलान्वित इति । एवं ताभिः कलाभिश्च युत औदयिकः शशी स्यादि-त्युपपन्नम् ॥ १६ ॥

वा.वा.—रविगुणैस्तिथिभिरिति। अत्रैवं साध्यमानश्चन्द्रस्तिथ्यन्ते भवति। तस्यौदयिकत्वादहर्गणसाधितावमशेषस्य चान्द्रीकरणं क्रियते। अवमशेषस्य चतुःषष्टिश्छेदः । यदि त्रिषष्टिसावनैश्चतुःषष्टिश्चान्द्रा लभ्यन्ते तदाऽव-मशेषान्तःसावनेन किमिति चतुःषष्टितुल्ययोर्गुणहरयोर्नाशे त्रिषष्टिरेव हरः । द्वादशगुणनमंशकरणाय । पुनः षष्टिगुणं कलीकरणायेति गुण-घातो गुणः कृतोऽवमशेषस्य ७२० । गुणहरौ नवभिरपवर्त्त्य गुणस्थाने-ऽशीतिः सप्तमांशस्तु स्वसप्तमांशाधिका दशैव भवन्ति तस्मादुक्तं 'स्वन-गभागयुतेन दशाहतक्षयदिनोर्वरितेन कलान्वितः'—इति । अहारराशे रूपं हरः कल्प्यः । दशानामधो रूपं हरस्तदधः सप्तमांशो धनगतः स्थाप्यः । ततः सूत्रेण—

"स्वांशाधिकोनः खलु यत्र तत्र भागानुबन्धे च लवापवाहे ।
तलस्थहारेण हरं निहन्यात् स्वांशाधिकोनेन तु तेन भागान्"॥

इति खखसूनां सप्तमांश इति स्पष्टम् ॥ १६ ॥

इति वासनावार्त्तिके प्रत्यब्दशुद्धिः।

**मरीचिः**—अथ लाघवादेतदहर्गणानयद्वारा ज्ञातावमशेषरूपभाज्याङ्का-च्चन्द्रसाधनं लघ्वहर्गणनिरपेक्षं द्रुतविलम्बितेनाह रविगुणैरिति । ति-थिभिरिष्टकालाव्यवहितपूर्वचान्द्रमासान्ताद्गणितागततिथिभिरित्यर्थः । द्वादशगुणितैर्लवगतो भागादिकः सूर्यः प्रागानीतो युतः । योजनानन्तरं सूर्यराश्याद्यवयवज्ञानासंभव इति पुनः सूर्यानयनं कार्यमिति गौरवभयात् पृथगित्युक्तम् । वस्तुतोऽत्र कार्यकाले प्रमादात् पृथगित्यायातम् । स सिद्धः । अहर्गणानयने चतुःषष्टिभक्तेन फले दिनचये आगते सति यदु-र्वरितं शेषं केवलं ग्राह्यम् । तद्दशगुणितं तेन स्वसप्तांशयुतेन कला-स्थाने युतः कार्यश्चन्द्रः स्यात् ।

अत्रोपपत्तिः । सूर्यचन्द्रान्तरद्वादशभागैरेका तिथिर्भवतीति पूर्वं बहुधा प्रतिपादनाद्गततिथयो द्वादशगुणाः सूर्यचन्द्रान्तरांशा भवन्ति-तत्र राश्याद्यवयवात्मकचन्द्रस्य प्रयोजनाद्दर्शान्ते तयोः समत्वाच्च भग-णज्ञाननिरपेक्षेण च लाघवान्मासादेर्गततिथयो गृहीताः । परमेते तिथ्यन्तकाले । अपेक्षिताः सूर्योदयासन्नकाले तत्रैव सूर्यज्ञानात् । अत एषां तदन्तरकालजसूर्यचन्द्रान्तरभागा योज्याः । तज्ज्ञानार्थं तु प्रथमतोऽवमशेषस्य चतुःषष्टिहरस्य सावनस्य तदन्तरकालात्मकस्य कल्प-कुदिनैः कल्पचान्द्रास्तदाऽवमशेषमितसावनैः किमित्यनुपातेन चान्द्रीकरणे शेषस्य कल्पचान्द्रदिवसाः१६०२९९९०००००० गुणः। हरघातो हर इति चतुः-षष्टिगुणितकल्पदिवसा हर एतन्मितः। १०००९८६६५२८००००० सिद्धः ।

तत इदं चान्द्रांशत्वाद् द्वादशगुणमन्तरांशास्तदन्तरकाले भवन्ति । तत्राचार्यैः कलानयनार्थं षष्टिगुणः कृत इति गुणघातो गुण इति विंश-त्यधिकसप्तशत-७२० गुणितकल्पचान्द्रदिवसाः ११६४१५९९२८०००००० गुणः सिद्धः । अत्र गुणहरौ प्रयुतघ्नभूनवनवरसद्विवेदवेदचन्द्रमितै-१४४२६९९१०००००० रपवर्त्तितौ गुणस्थानेऽशीतिः ८० हरस्थाने किञ्चि-न्न्यूनाः सप्त ६।५९।५५ ते लाघवाद्विकलाधोऽवयवेष्वन्तरादर्शनाच्च संपूर्णा

एव धृताः सप्त ७ । अत्रापि लाघवार्थं गुणस्य खण्डद्वयमेकं सप्ततिमितम् ७० । परं दशमितम् १० । प्रत्येकं हरश्च । प्रथमस्थाने गुणहरौ हरेणापवर्त्य गुणस्थाने दश । अतोऽत्रमशेषं दशगुणम् । तत्स्वसप्तभागयुतं खण्डत्वादिति सिद्धमुक्तम् । इदं द्वादशगुणतिथिघ्नधो योज्यं सूर्योदयासन्नकाले सूर्यचन्द्रान्तरभागज्ञानार्थम् । ततोऽन्तरभागाः सूर्ये योज्याश्चन्द्रः स्यादित्याचार्यैर्द्वादशगुणगततिथिभिरवमशेषोत्थफलेन च सूर्यः पृथग्योजितः । अत्र चन्द्रध्रुवको न योज्यः । सूर्यस्य वास्तवस्य ग्रहणात् । ध्रुवकस्तु प्रकारान्तरेण चन्द्रसाधने उपयुक्त इत्यत उक्तं रविगुणैरित्याद्युपपन्नम् ॥ १६ ॥

इदानीं भौमानयनमाह ।

दिनगणार्धमधो गुणसंगुणं
द्युगणसप्तदशांशविवर्जितम् ।
लवकलादिफलद्वयसंयुतः
क्षितिसुतध्रुवकः क्षितिजो भवेत् ॥ १७ ॥

**वा. भा.**—स्पष्टार्थमिदम् ।

अत्रोपपत्तिः । दिनगणार्धे भागा इति प्रत्यहं त्रिंशत् कला गृहीताः $\frac{0}{30}$ । तत् पृथक् त्रिगुणं जातम् $\frac{1}{30}$ । एताः कलाः पूर्वकलाभिश्रीकृता जाताः $\frac{31}{30}$ । एतत् कुजगतेरधिकमतोऽतः कुजगतिं विशोध्य शेषम् । ० । ३ । ३१ । ५३ । अनेन सप्तदशगुणेनैका कला भवति । अत उक्तं द्युगणसप्तदशांशविवर्जितमिति । पूर्वफलेन भागादिनाऽनेन च कलादिना भौमध्रुवको युक्तः कुजो भवति । यतोऽयमहर्गणोऽर्कोब्दान्ताद्रूर्ध्वमतस्तदुत्थं फलं रविमण्डलान्तिके योज्यमित्युपपन्नम् ॥ १७ ॥

**मरीचिः**—अथ भौमानयनं द्रुतविलम्बितेनाह दिनगणार्धमिति । ऊर्ध्वाधःक्रमेण लवादिकलादिफलद्वयं सिद्धम् । ताभ्यां वर्षादौ साधितमङ्गलध्रु-

वक्रो युतो यथायोग्यम् । अहर्गणकाले मङ्गलो भगणादिकः स्यात् । पूर्वार्धं स्पष्टम् ।

अत्रोपपत्तिः । कल्पकुदिनैर्भौमभगणभागा नखनवाद्रिरसद्विगजेषुगजरसद्व्यष्टमिता-८२६८५८२६७९२० स्तदाऽहर्गणेन क इत्यनुपातेन गुणस्य लाघवार्थं खण्डद्वयम् । एकं सहस्रघ्नतत्त्वाश्विगजेषुगोष्टाष्टाद्रिमितम् ७८८९५८२२५००० । नखनवद्विवेदखाभ्राभ्रनवसप्तराममितम् ३७९०००४२९२० अपरम् । प्रत्येकं हरश्च । प्रथमस्थाने गुणहरौ गुणेनापवर्त्य हरस्थाने द्वयमतोऽहर्गणार्धमंशा इति सिद्धम् । द्वितीयस्थाने कलाविकलानयनार्थं लाघवाद्गुणः षष्टिगुणः २२७४००२५७५२०० अनेनाहर्गणे च गुण्यमाने इष्टोनयुक्तेनेति विधिना खखाष्टगोगोनखाद्रिगजद्व्यङ्कमितेष्टेन ९२८७२०९९८०० युतो गुणीकृतः २३६६८७४६०५००० । अत्र पूर्वापर्त्ताङ्केन ७८८९५८२२५०० गुणहरावपवर्त्तितौ जातौ गुण३हरौ २ । अतोऽंशादिफलमेव त्रिगुणं कलात्मम् । ६६८७४६७४६७५०० । अत्र पूर्वापवर्त्ताङ्केन ७८८९५०२२ द्वितीयखण्डमिदं पूर्वकल्पितेष्ट—९२८७२०९९८०० गुणिताहर्गणस्य कल्पकुदिनांशेन हीनं कार्यम् । पूर्वमधिकग्रहणात् । अत्रापि गुणहरौ गुणेनापवर्त्तितौ हरस्थाने किञ्चिन्न्यूनाः सप्तदश ते पूर्णा एव गृहीता अन्तराभावदर्शनात् । अतोऽधोंऽशादिफलं त्रिगुणमहर्गणसप्तदशांशेन हीनं कलात्मकं द्वितीयखण्डफलमुक्तम् । अतोऽनयोर्योगो वर्षादितो मङ्गलभोगो भवतीति । संपूर्णभोगज्ञानार्थं भौमध्रुवोऽस्य योज्यस्तत्र ध्रुवे एव फले यथायोग्यं योजिते कृतेऽत उपपन्नं दिनगणार्धमित्यादि ॥ १७ ॥

इदानीं बुधचलानयनमाह ।

दिनगणः कृतसंगुणितः पृथग्-
गुणगुणः खगुणेन्दुभिरुद्धृतः ।
फलयुतः खलु तेन लवादिना
बुधचलं भवति ध्रुवकोऽन्वितः ॥१८॥

**वा. भा.**–अत्रोपपत्तिः । अहर्गणश्चतुर्गुणो भागा भवन्तीति प्रसिद्धम् । अथ त्रचलस्य कल्पभगणानां भागान् कृत्वा तेभ्यश्चतुर्गुणान् कुहान् विशोध्य शेषस्यास्य १४५६५३८३४२४० द्वादशांशेनानेन १२१३०८१९५२० शेषं कुहाश्चापवर्त्तिता जाताः शेषस्थाने द्वादश १२ कुहस्थाने खगुणेन्दवः १३० । अतः पृथगहर्गणो द्वादशभिर्गुण्यः । पूर्वं चात्र चतुर्गुणोऽहर्गण आसीत् । स एव त्रिगुणो द्वादशगुणो भवतीति गुणगुण उक्तः । पृथक् स्थितो यश्चतुर्गुणितः स एव त्रिगुणीकृतस्तेन द्वादशगुणितो जातः । खगुणेन्दुभिर्भक्तः फलभागैः पृथक् स्थितश्चतुर्गुणोऽहर्गणो युतः कार्यः । एवं ते भागाः प्राग्वद् ध्रुवके क्षेप्या इत्युपपन्नम् ॥१८॥

**मरीचिः**–अथ बुधशीघ्रोच्चानयनं द्रुतविलम्बितेनाह दिनगण इति । फलेन युतः पृथगानीतफलेन चतुर्गुणाहर्गणो युत इत्यर्थः । तेन योगसिद्धेन भागादिना ध्रुवकः स्वस्य युतः । बुधशीघ्रोच्चं भवति । शेषं स्पष्टम् ।

अत्रोपपत्तिः । अत्रापि बुधशीघ्रोच्चभगणांशस्य खसिद्धवेदाग्निषड्ङ्कभूत्रिसप्तेषुवेदाङ्कमितस्य गुणस्य ६४५७३१६६३४२४० खण्डद्वयमेकं लवघ्नगजेषुषण्नृपभूरामाङ्कमितम् ६३११६६५८०००००। । परं खसिद्धवेदाग्निगजरामेषुषडेषुशक्रमितम् १४५६५८३४२४० । प्रत्येकं हरश्च तत्र प्रथमस्थाने गुणहरौ हरेण १५७७९१६४५०००० अपवर्त्तितौ गुणस्थाने चत्वारः । द्वितीयस्थाने गुणहरौ नखेषुगोभूरामगजार्द्रिविश्वार्कमितै-१२१३७८३१९५२० रपवर्त्तितौ गुणस्थाने द्वादश हरस्थाने किञ्चिन्न्यूनं त्रिशदधिकशतम् । ते संपूर्णा एव गृहीताः । अत्रापि द्वाभ्यामपवर्त्तेऽप्याचार्यैश्चतुरैरपवर्त्तो न कृतो गणितक्रियागौरवात् । तथा च चतुर्गुणोऽहर्गणः प्रथमखण्डफलम् । द्वादशगुणिताहर्गणस्य खत्रीन्दुलवो द्वितीतखण्डफलम् । अत्र लाघवार्थं चतुर्गुणित एव त्रिगुणितः कृत आचार्यैः । तयोर्योगोऽंशाद्यं बुधशीघ्रोच्च वर्षादित इति ध्रुवयोजितं कार्यमत उपपन्नं दिनगण इत्यादि ॥ १८ ॥

इदानीं गुरोरानयनमाह ।

द्युमणिभिः कुनगैर्द्युगणो हृतो
लवकलाः स्वमृणं ध्रुवके गुरुः ।

वा. भा.—अत्रोपपत्तिः । किञ्चिन्न्यूनाः पञ्च कला गुरोर्गतिरिति द्वादशभिर्दिनैरेको भागः । यच्च्यूनं तेन रूपे हृत एकसप्ततिर्लभ्यते । अत एकसप्तत्या दिनैरेका कलेत्युपपन्नम् ।

अथ शुक्रचलानयनमाह ।

ऋतुभिरक्षदिगैर्दशसंगुणात्
फललवाः स्वमृणं ध्रुवके सितः ॥ १९ ॥

वा. भा.—अत्रोपपत्तिः । अत्र सुखार्थमहर्गणं दशगुणं कृत्वा भागहारद्वयेन फले साधिते । तत्र दशभ्यः षड्भिर्भागे हृते लब्धमेको भागश्चत्वारिंशत् कलाः १ । ४० । इदं दिनगतेरधिकं जातम् । अस्माद् गतिं विशोध्य शेषम् ० । ३ । ५२ । १५ । २५ । अनेन दशभ्यो भागे हृते लब्धाः पञ्चपञ्चेन्दवः १५५ । अतोऽहर्गणाद्दशघ्नात् पृथक् षड्भिः पञ्चतिथिभिश्च हृताल्लब्धे भागाद्ये धनर्णरूपे फले इत्युपपन्नम् ॥१९॥

मरीचिः—अथ द्रुतविलम्बितेन गुर्वानयनं शुक्रशीघ्रोच्चानयनं चाह । द्युमणिभिरिति । अहर्गणो द्वादशभक्तः फलमंशादि तद्गुरुध्रुवके संयुतम् । अहर्गण एकसप्ततिभक्तः फलं कलादि तत् तस्मिन्नेव ऋणं हीनं गुरुः स्यात् । दशगुणिताहर्गणात् षड्भक्तात् फलं भागादि तत् शुक्रशीघ्रोच्चध्रुवके युतं पुनर्दशगुणाहर्गणात् पञ्चपञ्चाशदधिकशत–१५५ भक्तात् फलमंशादि तत् तस्मिन्नेव हीनं सितः शुक्रशीघ्रोच्चं स्यादिति तात्पर्यार्थः ।

अत्रोपपत्तिः । खखाष्टविकृततिथ्यर्कभूविश्वमित-१३११२१५२३८०० गुरुभगणांशरूपगुणेन गुण्यमाने "इष्टोनयुक्तेन"—इति विधिना खखाद्रिविश्वतिथ्यद्रिरामभितेष्टेन ३७१५१३७०० युतो गुणो जातः खाभ्रबाणगिरि-

रामखत्रिगोशक्रविश्वमितः १३१४९३०३७५०० । अनेनाहर्गणो गुण्यः कल्पकुदिनैर्भाज्य इति । गुण-१३१४९३०३७५००हरौ १५७७९१६४५०००० गुणेनापवर्त्य हरस्थाने द्वादशातोऽहर्गणो द्वादशभक्त इति सिद्धम् । अत्राधिकत्वात् कल्पितेष्टगुणिताहर्गणस्य कल्पकुदिनांशो हीन इत्यत्रापि गुण-३७५१५१३७०० हरौ १५७७९१६४५०००० गुणेनापवर्त्य हरस्थाने किञ्चिन्न्यूनाः षष्टिद्विवेदाः * । अत्रान्तरादर्शनेन लाघवाच्च सम्पूर्णा एव धृताः ४२६० । अनेनाहर्गणे भक्ते फलमंशाद्यमित्याचार्यैः कलादिनिमित्तं षष्टिर्गुणः कल्पितस्तेन गुण-६०हरौ-४२६० गुणेना-६०पवर्त्य हरस्थाने७१ । तथा चाहर्गण एक सप्ततिभक्तः फलं कलाद्यम् । द्वादशभक्ताहर्गणांशादिफले हीनं ध्रुवयुतं कार्यम् । तत्र ध्रुव एव फले क्रमेण धनर्णे कृते धने धनर्णयोर्योगान्तरप्रसिद्धेः सर्वजनसिद्धत्वादत उपपन्नं द्युमणिभिरित्याद्यर्धम् ।

अथैवमेव खार्कात्यष्टिद्विषड्शीतिद्वितत्त्वमित-२५२८०६०२०१७१२० शुक्रशीघ्रोच्चभगणांशरूपगुणस्याशीत्यष्टदन्तेषुखखधृतिदिङ्मितेष्टयोजनेऽयुतघ्नपञ्चाद्रिषष्टिगजगोद्विरसयमभितो गुणो जातः २६२९८६०७५००००। अत्र गुणहरौ सहस्रघ्नपञ्चाद्रिषष्टिगजगोद्विषड्यमभिते—२६२९८६०७५००० रपवर्तितौ दशमितगुणपर्यमितहरावुपपन्नौ ।

अथात्रेष्टगुण-१०१८००५३२८८०हरौ १५७७९१६४५०००० गजाष्टदन्तेषुखखधृतिदिङ्गिते १०१८०५३२८८रपवर्तितौ जातौ गुणहरौ १० । १५५ । तेन दशगुणाहर्गणः पञ्चपञ्चाशदधिकशतभक्तः फलं भागा हीनं कार्यम् । तत्र ध्रुव एव फले भागाद्ये क्रमेण युतहीने कृते इत्युपपन्नमृतुभिरित्यादि ॥ १९ ॥

* वस्तुतो हरस्थाने ४२४७ । १५...इत्यादि फलमागच्छति तत्र लाघवादाचार्यप्रकारोपचार्ये "किञ्चिन्न्यूनाः षष्टिद्विवेदाः"-इति गणितज्ञैर्ध्येयम् ।

इदानीं शनेरानयनमाह ।

द्विघ्नो दिनौघः पृथगद्रभक्तो
लिप्ता विलिप्ता ध्रुवके स्वमार्किः ।

**वा. भा**—अत्रोपपत्तिः । गतिः कलाद्वयम् । अधोऽवयवात् पञ्चभि-र्दिनैर्द्वे विकले च भवत इत्युपपन्नं द्विघ्नो दिनौघ इत्यादि ।

इदानीं विधूच्चानयनमाह ।

दिग्भिर्गजेभैश्च हृतो दिनौघः
क्षेप्यो ध्रुवांशेषु भवेद्विधूच्चम् ॥ २० ॥

**वा. भा.**—अत्रोपपत्तिः । कलाषट्कं गतिरिति दशभिर्दिनैर्भागः । भागा-दिगतेः कलाषट्कं विशोध्य शेषेणानेन ० । ० । ४० । ५३ । ५६ रूपे हृते लब्धा गजेभाः ८८ । अतो दिग्भिर्गजेभैरित्याद्युपपन्नम् ॥ २० ॥

**मरीचिः**—अथ शनेश्चन्द्रोच्चस्य चानयनमिन्द्रवज्रयाऽऽह द्विघ्न इति स्पष्टार्थम् ।

अत्रोपपत्तिः । खखाष्टषड्रामरसाग्निपञ्चाष्टपञ्चभूराममितशनिभ-गणकलारूपगुणस्य ३१६५८५३६३६८०० खण्डद्वयम् । एकं लक्षघ्नगोदन्त-गजेषुदिनराममितम् ३१५५८३२९००००० । परं तु विकलात्मकं सहस्रघ्ना-ष्टनखवेदसिद्धभूखरसमितम् ६०१२४४२०८००० । अत्र प्रथमस्थाने गुण-३१५५८३२९००००० हरौ १५७७९१६४५०००० हरेणापवर्त्य गुणस्थाने द्वयम् । द्वितीयस्थाने गुण-६०१२४४२०८००० हरौ १५७७९१६४५०००० सहस्रघ्ना-ब्धिखस्वर्गरसखखदन्तमितैरपवर्त्तितौ । गुणस्थाने द्वयम् । हरस्थाने किञ्चिन्न्यूनाः पञ्च ४ । ५५ एतेऽन्तराभावदर्शनात् संपूर्णाः पञ्च धृताः । अत उक्तदिशा पूर्वार्धमुपपन्नम् ।

अथैवमेवाशीत्यष्टाष्टदिग्धृतिसप्तेषुसप्तेन्दुमितचन्द्रोच्चभगणांशरूप-गुणस्य २७५७१८१०८८८० खण्डद्वयम् । एकं सहस्रघ्नशरवेदभूपगोसप्तसप्तति-थिप्रमितम् १५७७९१६४५००० । परमशीत्यष्टाग्निषड्वेदोत्कृत्यङ्कात्यष्टिमि-

तम् १७९२६४६३८८० । तत्र प्रथमस्थाने गुणहरौ गुणेनापवर्त्य हरस्थाने दश द्वितीयस्थानेऽपि गुणेनापवर्त्य हरस्थाने किञ्चिदधिकाष्टाशीतिः ८८ । १ । परमविकारदर्शनात् पूर्णा गृहीता अत उपपन्नमुत्तरार्धम् । इतरमन्दोच्चानां सौरैकवर्षे संपूर्णैकविकलाभोगाभावाद्वर्षादिलद्ध्रुवतुल्यत्वेनाहर्गणात् पृथगानयनं न कृतमाचार्यैर्व्यर्थप्रयासादिति ध्येयम् ॥२०॥

अथ पातानयनमाह ।

ताडितः खदहनैर्दिनसङ्घः
षट्कषट्कशरहृत् फलमंशाः ।
स्वं ध्रुवे कुमुदिनीपतिपातो
राहुमाहुरिह केऽपि तमेव ॥ २१ ॥

**वा. भा.**—अत्रोपपत्तिः । कल्पराहुभगणानां राशिभिः कुदिनेषु भक्तेषु लब्धं षट्कषट्कशराः ५६६ । एभिर्द्युगणे भक्ते राश्यादि फलम् । तद्भागादिकं कर्तुं ताडितः खदहनैरित्युपपन्नम् ॥ २१ ॥

**मरीचिः**—अथ चन्द्रपातानयनं "स्वागतेति रनभाद्गुरुयुग्मम्"इत्युक्तया स्वागतयाऽऽह ताडित इति । कुमुदिनीपतिपातश्चन्द्रपातः । अस्य पश्चिमगत्या भगणकथनान्मेषमीनकुम्भेत्यादिविपरीतगणनयाऽऽगतराश्याद्यवयवानुसारेण ज्ञेयम् । अत एव—

"विलोमगतयः पातास्तद्वच्चक्राद्विशोधिताः"* ।

इति सूर्यसिद्धान्तोक्तेर्द्वादशराशिभ्यः शोधितस्यान्यग्रहवन्मेषवृषादिक्रमेण नायुक्तेति ध्येयम् ।

ननु वशिष्ठसिद्धान्ते—

"राहोर्वेदाङ्कनागाश्विशैलबाणखकुञ्जराः"—इत्यनेन ।

आर्यसिद्धान्तेऽपि—

* द्रष्टव्यो मुद्रितसूर्यसिद्धान्ते मध्यमाधिकारे ५४ श्लो. ।

"स्वर्भानोर्वेदतर्काष्टद्विशैलाब्धखकुञ्जराः" ।

इत्यनेन राह्वानयनमुक्तं युक्तं चैतत् ।

"राहुश्चतुष्टयस्थो निधनाय निरीक्षितो भवति पापैः" * ।

इत्यादौ "अजवृषभकर्कलग्ने रक्षति राहुः समस्तपीडाभ्यः" ।

इत्यादौ जातकसंहितासु चान्यग्रहलग्नवद्राह्वधिष्ठितस्थानोपयोगात् । अन्यथाऽर्कादीनां साधनकथनस्य व्यर्थत्वापत्तेः । अत एव गणितस्कन्ध इति स्कन्धोपयुक्तत्वेन मुख्य इत्यभिज्ञानामुक्तं युक्तम् । अतस्तद्वानयनं न कृतमित्यत आह राहुमिति । इह गणितस्कन्धे केऽपि वशिष्ठादयस्तं चन्द्रपातम् । एवकारोऽन्ययोगव्यवच्छेदार्थः । राहुसंज्ञमाहुः । तथा च तैश्चन्द्रपातो नोक्तस्तत्स्थाने राहुरुक्त इति । राहोरेव चन्द्रपातत्वमुक्तं भवतीति दर्शनाच्चन्द्रपातराहुपर्यायशब्दौ घटकलशवदिति नोक्तदोष इति भावः ।

"दक्षिणोत्तरतोऽप्येवं पातो राहुः स्वरंहसा" † ।

इति सूर्यसिद्धान्तोक्तेश्च ।

अत एव विवाहवृन्दावने—

"किञ्च गोलगणितेषु जिष्णुजः सोमरोमकमयादयोऽपि च ।
पर्ययेण ननु राहुपातयोर्नामनी विदधुरेव तान्त्रिकाः" ॥ इत्युक्तम् ।

अत्रोपपत्तिः । नृपाभ्राब्धिरामाद्रिसप्ताष्टभमितचन्द्रपातभगणराशिरूपगुण—२३८७७३४०१६ कुदिनमितहरौ १५७७९१६४५०००० । गुणोनापवर्त्ये हरस्थाने किञ्चिदधिका अपि पूर्वरीत्या संपूर्णाः षड्रसेषुमिता-५६६ गृहीतास्तेनाहर्गणो हरभक्तः फलं राश्याद्यमित्यंशादिग्रहणार्थं त्रिंशद्गुणाहर्गणः कृतः । अत्र गुणहरयोरपवर्तनसम्भवेऽपि गुणनक्रियागौरवाच्च कृतमाचार्यैः । एतेन "तिथिगुणास्विगजाश्विहृतस्तमः" इति "करणकु-

* वराहमिहिरकृते बृहज्जातके स्वल्पजातके चारिष्टभङ्गाध्याये इत्यादि पद्यम् ।

† द्रष्टव्यो मुद्रितसूर्यसिद्धान्ते स्पष्टाधिकारे ६ श्लो. ।

गठीरवो*''-क्तं निरस्तं गौरवात् । अयं पातो वर्षादित इति ध्रुवेषु योज्यः । कल्पादित इष्टकालपर्यन्तं भचक्रभोगसंख्या पश्चिमगत्या स्यादत उपपन्नं ताडित इत्यादि पात इत्यन्तम् । शेषोपपत्तिस्तु क्रान्तिवृत्तचन्द्रविक्षेपवृत्तसम्पातस्य पातत्वेन प्रतिपादनात् तदासन्ने चन्द्रे राहुग्रस्तनिशाकरक्षपग्रहणसम्भवात् पातस्थाने राहुर्वसतीति तैर्ज्ञातम् ।

"सर्वं भूमिसमं दानं सर्वे ब्रह्मसमा द्विजाः ।
सर्वं गङ्गासमं तोयं राहुग्रस्ते निशाकरे" ॥

इति स्मृत्या राहोर्ग्रहणे कारणत्वाच्च । किं च विष्णुनाऽमृतपानकाले राहोर्वधोपक्रमात् तस्यामृतांशलालसस्यामृतरूपचन्द्रभक्षणार्थं पातस्थाने वसतिर्युक्ता चन्द्रस्य निकटत्वात् । तेन चन्द्रपातराह्वोरभेदाद्युक्तमुक्तं राहुमाहुरिह केऽपि तमेवेति ।

एतदभिप्रायनिबन्धनं विवाहवृन्दावनेऽपि व्यक्तम् ।

"वेश्म चास्य शशभृद्विमण्डलक्रान्तिमण्डलमिथश्चतुष्पथम् ।
वृत्तयोः पतनमेव पात इत्याहुरत्र किल राहुरीक्ष्यते ॥
आपतन्तममृतद्युतिं सुधास्नानदानहवनांशलालसः''—इति ।

केचित् भगणानुपातेनानीतः पातः स द्वादशशुद्धो राहुरिति तावनुलोमविलोमगतिक्रमेण भिन्नावित्याहुः । भौमादिपातानां ध्रुवतुल्यत्वेन ज्ञानादहर्गणद्वारा पृथगानयनं न कृतमाचार्यैः ॥ २१ ॥

इदानीं प्रकारान्तरेण ग्रहानयनमाह ।

**लब्धाहताद्दिनगणाच्छशिषट्कशक्र-**
**दिग्भिर्नगाष्टनगभूतिथिभिः क्रमेण ।**
**देवाष्टखाङ्कशशिभिश्च रसाग्निवेद-**
**सिद्धैः खखाब्धिदहनाभ्रयमेन्दुभिश्च ॥ २२ ॥**

---

* नायं ग्रन्थः संप्रत्युपलभ्यते ।

भूपाङ्घ्रिलोचनरसैः खखखाभ्रनन्द-
नन्दाश्विभिर्गगनखाभ्रगजाङ्कनागैः ।
खाभ्राष्टषड्गजधृतिप्रमितैश्च भक्ताद्-
भागादिकानि हि फलानि रवेः सकाशात् ॥२३॥
विधोः फलं खाश्विगुणं विधेयं
ग्रहध्रुवाः स्वस्वफलैः समेताः ।
ते वा भवन्ति द्युचराः क्रमेण
भागादिकः स्यात् फलमेव भानुः ॥ २४ ॥

**वा. भा.**–स्पष्टम् ।

अत्रोपपत्तिः । यदि कल्पकुदिनैः कल्पभगणभागा लभ्यन्ते तदाऽहर्गणेन किमिति । एवं त्रैराशिके कृते पश्चात् संचारः* । यदि भगणभागमिते गुणके कुदिनानि हारस्तदा लक्षमिते किमिति । एवं लक्षगुणकुदिनेभ्यः पृथग् भगणभागहृतेभ्यो यानि फलानि तानि लक्षाहतस्य दनगणस्य भागहारा भवन्ति विधोस्तु लक्षेण विंशत्या च गुणितेभ्यः कुदिनेभ्यो हारः साध्यते । गतेर्बहुत्वादित्युपपन्नम् ॥ २२–२४ ॥

**मरीचिः**-ननु पूर्वानीतचन्द्रे चन्द्रध्रुवक्षयोजनाभावाच्चन्द्रध्रुवानयनस्य व्यर्थत्वापत्तेरित्यस्वरसात् । प्रकारान्तरेण ग्रहानयनं लाघवात् सिंहोद्धृताभ्याम् ।

"आख्यानकी स्यात् प्रकटीकृतार्थे यदीन्द्रवज्राचरणः पुरस्तात् ।
उपेन्द्रवज्राचरणास्ततोऽन्ये विपर्ययोक्ता विपरीतपूर्वा" ॥

इत्युक्तलक्षणादाख्यायिक्या चाह लक्षाहतादिति । सकाशात् तमारभ्य क्रमेण उक्तग्रहक्रमेण भागादिकानि फलानि भवन्ति ।

---

* यदि कल्प्यते $\frac{\text{भगणांशाः}}{\text{कुदिनानि}} = \frac{\text{१०००००}}{\text{या}}$ तथा विलोमतः $\frac{\text{कुदिनानि}}{\text{भगणांशाः}} = \frac{\text{या}}{\text{१०००००}}$

$\therefore \text{या} = \frac{\text{कुदिनानि} \times \text{१०००००}}{\text{भगणांशाः}}$ । अयमेव प्राचीनैः संचारः कथ्यते ।

तत्र चन्द्रस्य फलं विंशतिगुणं कार्यम् । वर्षादिग्रहध्रुवाः स्वस्वफलैरंशादिभिर्युक्ताः सन्तस्ते पूर्वानीता एव ग्रहा भवन्ति । क्रमेण । ननु सौरवर्षादौ रवे राश्यादिध्रुवकाभावात् । तद्योजने सूर्यफलस्यान्यग्रहवद्विकाराभावेन किं योज्यमत आह भागादिक इति । आनीतफलं केवलम् । एवकारेण किञ्चिद्योजनेऽस्य व्यवच्छेदः । भागादिकः सूर्यः स्यात् । तथा च विकाराभावेऽपि सूर्यसिद्धौ न क्षतिरिति भावः ।

अत्रोपपत्तिः । कल्पकुदिनैः १५७७९१६४५0000 कल्पभगणभागा उत्क्रमेण सू० १५५५२00000000 । चं० २0७९११८८000000 । मं० ८२६८५८२६७९२0 । बु· शी· उ० ६४५७३१९६३४२४0 । बृ० १३११२१५२३८00। शु·शी·उ० २५२८0६0२१७१२0। श·५२७६४२२७८८0। चं·उ० १७५७१८१0८८८0 चं· पा० ८३६३२0२0४८0 लभ्यन्ते तदेष्टाहर्गणेन क इत्यनुपातेन भगणांशमितगुणकुदिनमितहरौ क्रमेणैतैरङ्कैः—

सू १५५५२000 ।

चं· २0७९११८८0 ।

मं. ८२६८५८२ । ४0 । ४५ । ७ । १२ ।

बु· शी· उ· ६४६७३१९६ । २0 । ३२ । ३८ । २४ ।

बृ· १३११२१५ । १४ । १६ । ४८ ।

शु. शी· उ· २५२८0६0२ । १0 । १८ । १९ । १२ ।

श· ५२७६४२ । १६ । २२ । ४ ४८ ।

चं· उ· १७५७१८१ । ५ । १९ । ४0 । ४८ ।

चं· पा· ८३६३२0 । १२ । १७ । १६ । ४८ ।

अपवर्त्तितौ गुणस्थाने सर्वेषां लक्षसंख्योत्पन्ना १00000। हरस्थाने सावयवा उत्पन्ना अपि लघ्वहर्गणाद्ग्रहानयने निरन्तरदर्शनादेकत्रैव हरा लाघवात् कृतास्ते उक्ताङ्कमिता उत्पन्नाः । तत्र चन्द्रहरेऽपवर्त्तनेन सिद्धः सावयवः ७५८९ । २१ । अनेनाधोऽवयवहीनेन भक्ते चन्द्रस्य बहुगतिमत्त्वाद्-

बहून्तरमिति चन्द्रहरः सावयवः । एकत्र करणार्थे विंशतिगुणितः सिद्धो नगाष्टनगभूतिथिमितः १५१७८७ । अत एव हरोपचयात् फलापचय इति विंशतिगुणहरोपचयाद्विंशतिगुणितफलापचयः सिद्धोऽतः फलं विंशतिगुणं कृतम् । एतेंऽशाद्या ग्रहा वर्षादित इति संपूर्णभोगज्ञानार्थं ध्रुवयुताः कार्याः । तत्र सूर्यस्य राश्यादिध्रुवाभावात् फलमेव वास्तवः सूर्यः। अत उपपन्नं लक्षाहतादित्यादि भानुरित्यन्तं पद्यत्रयेणोक्तम् ॥ २२–२४ ॥

इदानीं दिनगतिसाधनमाह ।

**महीमितादहर्गणात् फलानि यानि तत्कलाः ।**
**भवन्ति मध्यमाः क्रमान्नभःसदां द्युभुक्तयः ॥२५॥**
**समा गतिस्तु योजनैर्नभःसदां सदा भवेत् ।**
**कलादिकल्पनावशान्मृदुर्द्रुता च सा स्मृता ॥ २६ ॥**

**वा. भा.**—अत्रोपपत्तिस्त्रैराशिकेन । पूर्वं गतिर्योजनात्मिका ग्रहाणां तुल्यैवोक्ता । इदानीमतुल्या । सा कलादिकल्पनावशात् ॥ २५–२६ ॥

**मरीचिः**—नन्वेते ग्रहभोगाः प्रतिदिननियतभोगगणनया भवन्तीति प्रतिदिनग्रहभोगरूपा मध्यमा गतिः कथं ज्ञेयाऽतः प्रमाणिकयाऽऽह महीमितादिति । महीमितादेकमितादहर्गणाद्यानि पूर्वोक्तप्रकारेण ग्रहफलानि तेषां कला ग्रहाणां क्रमान्मध्यमा द्युभुक्तयो दिनगतयो भवन्ति । अत्र फलानीत्युक्तेन ध्रुवयोजनं कार्यं नेति ध्येयम् । यथाऽहर्गणः १, लक्षगुणः १००००० सूर्यहर-१०१४६१ भक्तः फलमंशादि ० । ५९ । ८ । ९ । एतत्कलाः ५९ । ८ । ९ । सूर्यस्य कलात्मिका गतिरेकदिने । एवं सर्वेषां स्वहरभक्तस्य कल्पगतय आनेयाः । अस्य प्रकारस्य स्थूलत्वात् स्थूलगतिरित्येकाहर्गणात् "द्युचरचक्र"–त्यादिनाऽऽनीता भगणादिफलकलाः सूक्ष्मगतयो भवन्तीति सूचनार्थं साधारण्येन फलानीत्युक्तम् । एता अवयवानवधित्वाच्च सिद्धाः पठिताः । एतेन ज्ञातग्रहस्य स्वमध्यमभुक्तिरेकादिगु

णिता योजिता अहर्गणसाधनं विनाऽपि ग्रहज्ञानं भवतीति ग्रहसाधन लाघवं दर्शितम् ।

अत्रोपपत्तिः । कल्पकुदिनैः कल्पभगणकलास्तदैकमिताहर्गणेन का इत्यनुपातेनैकदिनभोगो मध्यमगतिः । उपचयापचययोरनुपातेऽनापहात् । अत एव यत्प्रकारेण मध्यमानयनमुक्तं तत्प्रकारेणैकदिनमिताहर्गणात् फलं मध्यमगतिः स्यादिति तस्याः स्थूलत्वसूक्ष्मत्वं प्रकारस्थूलत्वसूक्ष्मत्वानुसारेणेत्यलम् ॥ २५ ॥

ननु कक्षाध्याये "पादोनगोऽब्धधृतिभूमितयोजनानी"त्यादिना ग्रहाणां तुल्यगतिरुक्ता तत् कथं महीमितादित्यानीतग्रहगतिर्भिन्ना । न ह्येककाले तुल्याऽतुल्या च गतिः संभवति । असम्भवात् । अतः प्रमाणिकयाऽऽह समा गतिस्त्विति । ग्रहाणां गतिर्नित्यं योजनैः समा तुल्या भवेत्। यथा कलादिका कदाचित् तुल्या तथा कदाचिद्योजनगतिरतुल्या न स्यादिति सूचनार्थं नित्यपदोपादानं ध्येयम् । सा गतिस्तुल्या योजनात्मका । कलादिकल्पनावशात् कलाविकलाकल्पनावशात् ।

"भुक्तियोजनकक्षा या सेन्दोर्भगण-३२४००० संगुणा ।
स्वकक्षाप्ता तु सा तस्य तिथ्याप्ता गतिर्लिप्तिका" * ॥

इति सूर्यसिद्धान्तोक्तकल्पनावशादित्यर्थः । कस्य चिद्बहवः कलाः कस्यचित् स्वल्पाः कला गतिर्भवतीति । मृदुर्मन्दा । द्रुता शीघ्रा । गतिः स्मृता च पूर्वाचार्यैः परस्परम् ।

तथा च श्रीपतिः—

"तुल्या गतिर्योजनवर्त्मनैषां लिप्ताप्रवृत्त्या मृदुशीघ्रभावः"†—
इति । एवं च तुल्यगत्यामपि तत्र कलादिकाऽतुल्या गतिः प्राचीनैः प्रोक्तेति न क्षतिः ।

* सूर्यसिद्धान्ते भूगोलाध्याये ८३तमः श्लोको द्रष्टव्यः ।

† नेदानीं श्रीपतिकृतः सिद्धान्तग्रन्थ उपलभ्यते ।

अत्रोपपत्तिः । स्वकक्षायां परिवर्त्तमाना ग्रहास्तुल्ययोजनप्रदेशरूपगतौ कलाभेदस्य प्रत्यक्षसिद्धत्वेनातुल्याश्चलन्तीति युक्तम् । अन्यथा कक्षाभेदभगणभोगभेदयोरनुपपत्तेः ॥ २६ ॥

इदानीमतुल्यत्वे कारणमाह ।

**कक्षाः सर्वा अपि दिविषदां चक्रलिप्ताङ्कितास्ता**
**वृत्ते लघ्व्यो लघुनि महति स्युर्महत्यश्च लिप्ताः ।**
**तस्मादेते शशिजभृगुजादित्यभौमेज्यमन्दा**
**मन्दाक्रान्ता इव शशधराद्भान्ति यान्तः क्रमेण॥२७॥**

**वा. भा.**—यतः सर्वा अपि कक्षाश्चक्रलिप्ताभिरेवाङ्किताः । अतो महति वृत्ते महत्यो लिप्ताः स्युः । लघुनि लघ्व्यः । तद्यथा चन्द्रकक्षा सर्वाधःस्था लघुः । तस्यामेका कला पञ्चदशभिर्योजनैर्भवति । शनेः कक्षा सर्वोपरिस्था सा महती । तस्यामेका कला योजनानां षड्भिः सहस्रैरेकसप्तत्यैनै-५९२९ र्भवति । योजनं चतुःक्रोशमेव । अतश्चन्द्रात् सकाशादूर्ध्वोर्ध्वस्था बुधशुक्रादयः क्रमेण मन्दाक्रान्ता मन्दगतय इव भान्ति । मन्दाक्रान्ताच्छन्दोऽपि सूचितम् ॥ २७ ॥

इति सिद्धान्तशिरोमणिवासनाभाष्ये प्रत्यब्दशुद्धिः ।

**मरीचिः**—ननु कक्षासु योजनगतिप्रदेशे कलासमत्वमेवास्तु लाघवात् । न चैवं चक्रकलाङ्कितत्वं स्यात् कक्षास्विति वाच्यम् । स्वस्वकक्षायामतुल्यकलाङ्कितत्वे तत्तत्कक्षापरिवर्त्तकलाभोगेन भगणभोगकल्पनादिष्टापत्तेरित्यतस्तदुत्पत्तिकथनव्याजेनोक्तार्थं द्रढयति कक्षाः सर्वा इति । ग्रहाणां सर्वाः कक्षाः । सर्वपदेन प्रतिवृत्तादीनि । ग्रहभ्रमवृत्तरूपकक्षाणां चलकर्णवशादनेकत्वाद्वा सर्वा इत्युक्तम् । चक्रलिप्ताङ्किताः । चक्रं द्वादशराश्यात्मकम् । तस्य कलाभिः । "क्षेत्रे समाद्यने"-ति परिभाषया षट्शतयुतैकविंशतिसहस्रमिताभिरङ्किताश्चिह्निताः सन्ति । अपिरेवकारार्थः । तेन न्यूनाधिककलाङ्कितनिरासः । अन्यथा कक्षापरिवर्त्तेन ग्रहाणां भग-

णभोगानुपपत्तिः । न च तत्तद्वृत्ते॰ तत्तत्कलाभोगेन भगणभोगस्याङ्गीकारान्न क्षतिरित्युक्तं प्रागिति वाच्यम् । तत्तद्वृत्तानामनेकत्वेन द्वादशराशिकलानां पृथगनन्तभेदेन गौरवात् । क्वचित् पूर्वशास्त्रे सूर्यादिभिस्तादृशस्यानुक्तत्वान्मानाभावाच्च । लाघवात् परिभाषया चक्रकलानां सूर्याद्युक्तेन च सर्वकक्षास्वङ्कनं युक्तम् । तासां वृत्ते विनिगमनाविरहात् समप्रदेशाङ्कनाद्गतियोजनप्रदेशे कलातुल्यत्वाभावः प्रत्येकं सिद्धः । इदमेव स्पष्टयति ता इति । ताः समप्रदेशाङ्किताः कलाः । लघुनि वृत्ते कक्षायां लघ्व्यः स्वल्पप्रदेशमिताः । महति महत्यो बहुप्रदेशमिताः परस्परं भवन्ति । तद्यथा । चक्रकलाभिः खखरसस्वर्ग-२१६००मिताभिः कक्षायोजनानि तदैककलया कानीत्यनुपातेन चन्द्रकक्षायां पञ्चदशयोजनानां बुधकक्षायामष्टचत्वारिंशद्योजनैः शुक्रस्य त्रयोविंशत्यधिकशतेन रवेः शतद्वयेन भौमस्य सप्तसप्तत्यधिकशतत्रयेण गुरोश्चतुर्विंशतिशतेन शनेर्दशाधिकैकोनषष्टिशतयोजनैः कला भवति । नक्षत्रकक्षायां तु एकत्रिंशदधिकशतत्रययुतद्वादशसहस्रयोजनैरेका कला स्यात् । योजनमानं सर्वत्र नियतमेव । एतेन यस्य कक्षा लघ्वी तस्याधो यस्य महती तस्य तदूर्ध्वे कक्षेति सूचितम् । उपसंहरति तस्मादिति । तस्मात् । यतो लघुवृत्ते महद्वृत्ते यथायोग्यं लघ्व्यो महत्यः कलाः । तद्धेतोरित्यर्थः । चन्द्रात् एते दृश्यमानबिम्बाः प्रसिद्धा बुधशुक्ररविभौमगुरुशनैश्चराः । यान्तः स्वकक्षावृत्ते तुल्ययोजनानि गच्छन्तो मन्दाक्रान्ता मन्दं स्वल्पमाक्रमणं गमनमेषां ते मन्दगतयः । इव सादृश्ये । वस्तुतस्तुल्यगमनात् । क्रमेण यथोक्तक्रमेणोत्तरोत्तरं परस्परमपि । चन्द्रापेक्षया बुधो मन्दगतिस्तदधिकः शुक्रस्तदधिकमन्दगतिः सूर्य इत्यादिक्रमेण बुधापेक्षया शुक्रस्तदपेक्षया रविस्तदपेक्षया भौम इत्यादिक्रमेणापि । अत एव सप्तमग्रहस्य शनैश्चरत्वं युक्तम् । तदूर्ध्वे ग्रहकक्षाभावात् । यद्यपि बुधशुक्रसूर्याणां मध्यगत्यभेदात् परस्परं मन्दगतित्वं न सम्भवति तथाऽपि बुधशीघ्रोच्चशुक्रशीघ्रोच्चगत्योर्भेदात् तत्कक्षायामेव तयोरवस्थानात् । चन्द्रान्मन्दगतित्व-

स्योक्तेश्च । भान्ति मनसि प्रतिभान्ति । तुल्ययोजनगमनेन मन्दत्वमसम्भवतीति भान्तीत्युक्तं वस्तुतो न सन्तीत्यर्थः । तथा च स्वस्वकक्षायां तुल्ययोजनप्रदेशे कलानां तुल्यसंख्याभावात् तत्र याः कलास्ता गच्छन्ति प्रतिदिनमतो गतेर्मन्दत्वं शीघ्रत्वं च सिद्धमिति भावः ।

"मन्दाक्रान्ता जलधिषडगैर्म्भौ नतौ ताद्गुरू चेत्"—इति ।

इत्युक्तत्वान्मन्दाक्रान्ता इत्यनेन तदाख्यं पद्यमपि सूचितम् ।

तद्व्याख्या तु याः कक्षाश्चरणव्यक्तयः सर्वाश्चतस्रो लघुनि वृत्ते छन्दसि लघ्व्योऽल्पाक्षराः । महति वृत्ते महत्यो बह्वक्षराः । ताः पादव्यक्तयः । दिविषदां चक्रलिप्ताङ्किताः । ग्रहाणां चक्रं सर्वसंख्या । चक्रस्य समूहवाचकत्वात् । सा त्वष्टौ । राहोर्ग्रहपदे ब्रह्मणा स्थापितत्वात् । केतोश्च राहूतिरिक्तत्वाच्चाष्टसंख्यया युक्ता लिप्ताः षष्टिः । कलानां तन्मितत्वात् । तत्संख्याक्षरैरष्टषष्ट्यक्षरैरङ्किता युक्ता अष्टषष्ट्यक्षरघटितं पद्यमित्यर्थः । पादाक्षरमितिस्तु प्रत्येकं सप्तदशेत्यर्थसिद्धा । तस्माद्धेतोः । एते चरणवर्णाः । शशिजभृगुजादित्यभौमेज्यमन्दाः । शशिजो बुधः । तत्संख्या त्वादित्यवाराच्चतुर्मिता । भृगुजः शुक्रस्तत्संख्या षण्मिता, सूर्याद्भूमिसम्बन्धिप्राणिभिः पूज्यो मन्दः शनैश्चरः । वारक्रमेण तत्संख्या सप्त । तथा चैतत्संख्याभिश्चतुःषट्सप्तभिरुत्तरोत्तरमुन्मिता मन्दाक्रान्ता मन्द उच्चारणमार्गो येषां ते । एते वर्णा अवसानास्पदीभूता इवेत्यनेन वस्तुतोऽवसानाभावात् । अन्यथाऽऽनुपूर्व्योपद्यपठनानुपपत्तेः । तस्मात् तेषु यतिर्भवतीत्यर्थः । च पुनरेते शशधरात् चन्द्रोन्मिताद्गणात् मगणात् । तमारभ्य । भान्तियान्तः क्रमेण । भो भगणः । अन्ति । "नामैकदेशे नामग्रहणात्" अन्तिमो नगणः । ययोर्गणयोर्मध्यस्था आद्यन्तवर्णलोपाच्चत्वारो वर्णा गुरुद्वयैकलघुगुरवः ऽऽ।ऽ । क्रमेण यगणक्रमेण । अग्रे रगणस्योक्ते रगण इत्यर्थः । तत्र क्रमेण तगणगुरुलघुभिर्लिप्ता अङ्किता इत्यर्थः । तर्हि मन्दाक्रान्ता आवृत्त्या तद्वृत्तसम्बन्धिनः स्युः । तद्वर्णोच्चारणानुपूर्व्या पद्यं मन्दाक्रान्तसंज्ञं स्यादित्यर्थः । न च वृत्तरत्नाकरोक्त-

लक्षणाच्चरणान्तिमाक्षरस्य लघुत्वेऽपि गुरुत्वसिद्धावक्षतेरिति मन्तव्यमत्र कथमुपेक्षितमिति वाच्यम् । " पादान्तस्थं विकल्पेन"—इत्युक्त्याऽन्तिमाक्षरस्य लघुत्वेऽपि गुरुत्वसिद्धावक्षतेरिति मदुक्ता ।

अत्रोपपत्तिः । क्रान्तिवृत्ते वस्तुतो द्वादशराशीनां सत्त्वात् । परिभाषया कलाः खखषट्स्वर्गमिताः । तदनुरोधाद्ग्रहकक्षाणां सत्त्वात् तत्रापि द्वादशराशिकलास्तत्तुल्या एव कल्पिताः । अन्यथा ग्रहकक्षायाः क्रान्तिवृत्तस्य च महदन्तरेण स्थितत्वाद्ग्रहाधिष्ठितराश्यादिस्थानासिद्धेः । अत एव राश्यंशकलाकल्पनाद्ग्रहकक्षायां क्रान्तिवृत्तप्रदेशसमसूत्रेणेत्युक्तं प्राक् । ततश्चोक्तमुपपन्नम् ।

"उपरिस्थस्य महती कक्षाऽल्पाऽधःस्थितस्य च ।
महत्या कक्षया भागा महान्तोऽल्पास्तथाऽल्पया ॥
कालेनाल्पेन भगणं भुङ्क्तेऽल्पभगणाश्रितः ।
ग्रहः कालेन महता मण्डले महति भ्रमन् ॥
स्वल्पया तु बहून् भुङ्क्ते भगणान् शीतदीधितिः ।
महत्या कक्षया गच्छन् स्वल्पान् भुङ्क्ते शनैश्चरः* ॥"
इति सूर्योक्तमित्यलं पल्लवितेन ॥ २१ ॥

**मरीचिः**—ग्रग्रिमग्रन्थस्यासंगतोक्तपरिहारमध्यायसमाप्तिं सूचयन् फक्किकयाऽऽह इति प्रत्यब्दशुद्धिरिति । अब्दमब्दं प्रतीति प्रत्यब्दं वर्षे वर्षे शुद्धिर्ग्रहाणां शोधनकरणम् । ग्रहसाधने शुद्धेरेव मूलभूतात् । तथा चोक्तविषयस्य समाप्तत्वात् तदग्रिमस्य भिन्नप्रकरणत्वात् संगतमेवेति भावः ।



* मुद्रितसूर्यसिद्धान्ते भूगोलाध्याये ७५-७८ श्लोका द्रष्टव्याः ।

# अथाधिमासनिर्णयः ।

इदानीमहर्गणादौ विशेषमाह ।

अभीष्टवारार्थमहर्गणश्चेत्
सैको निरेकस्तिथयोऽपि तद्वत् ।
तदाऽधिमासावमशेषके च
कल्पाधिमासावमयुक्तहीने ॥ १ ॥

वा. भा.—इह किल स्थूलतिथ्यानयने यस्यां तिथौ यो वार आगतः स चेदहर्गणे नागच्छति तदाऽहर्गणं सैकं निरेकं कृत्वा ग्रहाः साध्या इति ज्योतिर्विदां संप्रदायो युक्तियुक्त एव । यतोऽहर्गणस्य वारो नियामकः । एवं कृते यो विशेषः सोऽभिधीयते । तिथयोऽपि तद्वदित्यादि । अत्रैतदुक्तं भवति । यदा वारार्थं सैकोऽहर्गणः कृतस्तदाऽधिमासावमशेषाभ्यां चन्द्रार्कानयने कोट्याहतैरङ्कृतेन्दुविश्वैरित्यादौ द्वादशगुणास्तिथयोऽर्कभागेषु याः क्षेप्यास्ताः सैकाः कृत्वा द्वादशगुणाः क्षेप्याः । यदा निरेकोऽहर्गणः कृतस्तदा निरेकाः कृत्वा । तथा यदि सैकोऽहर्गणस्तदाधिमासशेषं कल्पाधिमासैर्युतं कार्यम् । अवमैरवमशेषं च । यतः सैकासु तिथिषु सैकोऽहर्गणो निरेकासु निरेकः । तथा प्रतिदिनमधिमासशेषस्याधिमासैरुपचयोऽवमैरवमशेषस्यातो युक्तमुक्तम् * ॥ १ ॥

मरीचिः-अथात्राधिकारे विशेषमंग्रहं विवक्षुः प्रथमं बृहदहर्गणादौ विशेषमुपजातिकयाऽऽह अभीष्टवारार्थमिति । यद्दिनमभीष्टमधिकृत्याहर्गणः साधितस्तस्मात् सप्ततष्टाद्दिनीयवारो नायाति । किन्तु तस्मात् पूर्वोऽपरो वा वार आयाति तदाऽभीष्टवारीयाहर्गणसिद्ध्यर्थमहर्गण आनीतः ।

---

* इतोऽग्रे वासनावार्त्तिकटीकया भवितव्यं किन्तु तट्टीकाकारेण नृसिंहाचार्येणेतः प्रभृति बीजसंस्कारपर्यन्तमामध्यमाधिकारमेकत्रैव सम्मिलिता निर्गलितार्थाः संरचिता अतो यथावत् प्रत्येकश्लोकान्ते संरचणमसंगतमवगम्याधिमासनिर्णयान्ते सा न्यासितेति विज्ञैर्विवेचनीयम् ।

सैक एकयुक्तो निरेक एकहीन इति प्राचीनगणनासम्प्रदायो 'द्युचर-चक्रहतो दिनसंचयः''—इत्यादिप्रकारेण ग्रहसाधनार्थे कृतश्चेत् तदा सूर्यचन्द्रसाधनार्थे च तिथ्योऽहर्गणानयनार्थे या योजिताः शुक्लादिगतास्तिथयश्चैत्रादिगततिथयश्चाहर्गणवत् सैका निरेकाः कार्याः । एताभ्यः ''कोट्याहते''-रित्यादिना श्लोकत्रयेण यथायोग्यं सूर्यचन्द्रौ साध्यौ । अत्राधिशेषावमशेषयोरावश्यकत्वादहर्गणात् तद्द्वारीयाधिशेषज्ञानार्थमाह तदेति । तदा यदा तिथयः सैका निरेका इत्यर्थः । अधिशेषावमशेषके अहर्गणानयने ज्ञाते कल्पाधिमासावमयुक्ते हीने कार्ये । क्रमेण कल्पोक्तावमाभ्यां युतहीने । तिथिवशतः सैकतिथिनिरेकतिथिक्रमेणेत्यर्थः । ते सिद्धे शेषे सर्वत्र याह्ये न पूर्वागते । पूर्वागताहर्गणस्य तद्भिन्ने तत्त्वाभावात् । अत्र कल्पाधिमासयुतमधिशेषं कल्पसौरदिनाधिकं चेत् तैस्तष्टं कार्यम् । तथाऽवमशेषं कल्पावमयुतं कल्पचान्द्रदिनाधिकं चेत्तैस्तष्टम् । तत्र वास्तवमध्यममानेन गताधिमासावमज्ञानार्थमागताधिमासाः सैका गतावमानि च सैकानि । न त्वहर्गणसिद्ध्यर्थम् । तस्य सैकनिरेकत्वाभ्यां सिद्धेः । यदा त्वधिशेषमवमशेषं च कल्पाधिमासावमाभ्यां क्रमेण हीनं न तदा-तच्छेषं क्रमेण कल्पोक्तसूर्यचान्द्रदिनाभ्यां युतं कृत्वा कल्पाधिमासावमाभ्यां हीनं क्रमेण कार्यम् । अत्राप्यागताधिमासा अवमानि च वास्तवज्ञानार्थं निरेकाः कार्याः । न त्वहर्गणसिद्ध्यर्थमिति ध्येयम् । यदि तु इष्टदिनमधिकृत्याहर्गण आनीतस्तस्मात् सप्ततष्टात् तद्दिनीयवारे नायाति पूर्वोऽपरो वार आयाति तदाऽपि इष्टदिनमुपेत्याहर्गणानीतवारे ग्रहानयनमभीष्टं स्यात् । तदाऽहर्गणादौ सैकनिरेकत्वादिविशेषो न कार्यः । किन्तु यथास्थिताहर्गणागततिथ्यधिशेषावमशेषेभ्यो ग्रहानयनं कार्यमिति सूचनार्थं चेदित्युक्तमिति ध्येयम् ।

अत्रोपपत्तिः । ननूपपत्तिसिद्धाहर्गणादभीष्टदिनमधिकृत्य साधितादपि अभीष्टवारः कथं नायाति । तन्निमित्तं सैकनिरेकतादिकं कुतः कार्यमिति चेत् । उच्यते । अभीष्टवारेऽहर्गणसाधनार्थं त्रिंशद्गुणस्य

मासगणस्य तद्वारीयमध्यमगततिथयो योज्याः । अहर्गणस्योक्तप्रकारेण मध्यमत्वात् । स्पष्टमानस्यानियतत्वादनुपातद्वारा तदभिप्रायेण तत्साधनस्याशक्यत्वाच्च । न हि मध्यममानेनाहर्गणसाधनार्थं स्पष्टगततिथियोजनं युक्तं विसदृशत्वादिति स्थितिः । तत्र मध्यमगतितिथीनामज्ञानात् तद्वारे स्पष्टमानसिद्धतिथिपत्रदर्शनेन स्पष्टगततिथिरेव मध्यत्वेन योजिता । अस्या यदि पूर्ववारे मध्यममानेनाप्यन्तिमकालस्तदा स्पष्टगततिथियोजनमेव मध्यमगततिथियोजनं भवतीति यथागताहर्गणाद्वार आयात्यतः स एवाहर्गणोऽभीष्टदिनग्रहसाधनार्थमुपयुक्तो भवति । अथ यदि स्पष्टगततिथेर्मध्यममाने न ततोऽपि पूर्ववारेऽन्तिमकालस्तदा स्पष्टगततिथियोजनं पूर्ववारे मध्यमगततिथियोजनं भवतीति । साधिताहर्गणाद्वारः पूर्वो यात्यतोऽभीष्टवारेऽहर्गणसिद्ध्यर्थं सैकत्वमहर्गणे । एकदिनान्तरत्वात् । अत एवाभीष्टवारे स्पष्टगततिथयः सैका मध्यममानेन गततिथयो भवन्ति । यदा तु स्पष्टगततिथेर्मध्यममानेनाभीष्टवारेऽन्तिमकालस्तदा स्पष्टगततिथियोजनमभीष्टदिनोत्तरवारे मध्यमगतितिथियोजनं भवतीति साधिताहर्गणोऽभीष्टदिनान्तिमवारे भवत्यतोऽभीष्टवारेऽहर्गणसिद्ध्यर्थं साधिताहर्गणो निरेकः । अत एवाभीष्टवारे स्पष्टगततिथयो निरेका मध्यममानेन गततिथयो भवन्ति । अत एव यदाऽभीष्टवारमधिकृत्य साधिताहर्गणः पूर्वापरवारे भवत्यपि तत्रैवेष्टस्तदा स्पष्टगततिथयोऽहर्गणश्च यथास्थिता एव तत्र तेषां वस्तुतस्तादृशत्वात् । अतः सुष्ठूक्तमभीष्टवारार्थमहर्गणश्चेत् सैको निरेकस्तिथयोऽपि तद्वदिति । अत एवाभीष्टवारे मध्यममानसिद्धतिथिपत्रदर्शनेन गततिथयो योज्यास्तदा नायं विशेष इति ध्येयम् । अथाहर्गणानयनार्थे यथास्थिताः स्पष्टगततिथयो योजिता न तु सैका निरेकाः । अन्यथाऽहर्गणे सैकत्वनिरेकत्वानुपपत्तेरित्यहर्गणगणितसाधने यदधिशेषं यच्चावमशेषं तयोर्यथास्थितयोजिततिथ्यन्तकालीनत्वात् । ताभ्यां 'कोट्याहते'रित्यादिश्लोकत्रयसाधनं सूर्य-

चन्द्रयोः कथं सिद्धेदिति । स्वाभीष्टसैकनिरेकतिथ्यन्तीयसाधनार्थमेकचा-न्द्रदिनरूपतिथेर्यदधिशेषं यच्चावमशेषं तेनाहर्गणानयनसिद्धं तत् क्रमेण यथायोग्यं हीनं युतं च कार्यम् । तत्र कल्पचान्द्रैः कल्पाधिमासास्तदैक-चान्द्रदिनेन के इत्यनुपातेनैकतिथेरधिशेषं सौरं चान्द्रात् साधनात् । एतदहर्गणानयनसिद्धाधिशेषस्य चान्द्रस्य भिन्नजातित्वेन योजनवियोज-जनकरणाशक्यात्वात् सजातीयम् । कल्पसौरदिनैः कल्पचान्द्रास्तदैकति-तिसिद्धसौराधिशेषेण के इत्यनुपातेन कल्पचान्द्रस्य गुणहरत्वात् तुल्यत्वेन नाशादेकतिथेश्चान्द्रमधिशेषं कल्पसौरदिनभक्तकल्पाधिमासरूपं हीनं युतं च कार्यमतोऽहर्गणानयनसिद्धाधिशेषस्य मासात्मकस्य कल्पसौर-दिनहरत्वाच्चाधिमासाः कल्पोक्ता एव युतहीनाः कृता इति सिद्धम् । एवं कल्पचान्द्रदिनैः कल्पावमानि तदैकतिथिरूपचान्द्रदिनेन किमित्यनु-पातेन सावनमवमशेषं कल्पचान्द्रदिनभक्तकल्पावमरूपमहर्गणानयनसिद्धा-वमशेषस्य सावनस्य कल्पचान्द्रहरस्य हीनं युतं कार्यमिति कल्पावमैर्युतं हीनं वाऽवमशेषं कार्यमिति सिद्धम् । अतः सुष्ठूक्तं तदेत्याद्युत्तरार्धम् । केचित् तु यतः सृष्ट्यादौ पूर्णेऽहर्गणे रविवारस्ततो रूपेऽहर्गणे चान्द्र-वारः । एवमनुदिनमेकैको वारो वर्धते । एवमत्र वाराः सावनास्तिथयः पुनश्चान्द्रास्तदन्तरमवमानि । अत्र स्पष्टेऽवमे पतिते मध्यमकर्मण्यगृ-हीते सैकता घटते । अपतिते गृहीते निरेकतेति युक्तियुक्तमेव सैकत्वं निरेकत्वं च । तदुपलब्धिरभीष्टवारेण भवति । अहर्गणस्य साधनत्वेन वारनियामकत्वादित्याहुः ॥ १ ॥

इदानीं लघुदिनौघविषयमाह ।

अथैवमेवाल्पदिवागणेऽपि
सैकं निरेकं च तदाऽवमाग्रम् ।
तथाऽधिमासस्य तिथीर्गृहीत्वा
लघुर्दिनौघः सुधिया प्रसाध्यः ॥ २ ॥

**वा. भा.**—लघ्वहर्गणे सैके निरेके तिथयोऽपि सैका निरेकाः । तत्राव-मशेषमपि सैकं निरेकं कार्यम् । यतस्तत्रावमानयने रूपगुणा एव तिथय-श्चतुःषष्ट्या हृताः । अथ लघ्वहर्गणे साध्यमानेऽभीष्टाहचैत्राद्यन्तरे यद्य-धिमासोऽस्ति तदा तस्यापि तिथीर्गृहीत्वा लघुर्दिनौघः साध्यः । अत्र लघुरिति विशेषणाद्बृहदहर्गणे न ग्राह्यः । यतस्तत्राधिमासानयने लब्धाधिमासास्ता युक्ता भविष्यन्ति । लघ्वहर्गणानयने त्वब्दान्तादूर्ध्वम-धिमासानयनस्याभावात् तत्रावश्यं योज्याः ॥ २ ॥

**मरीचिः**—अथोक्तरीत्या लघ्वहर्गणे विशेषमुपजातिकयाऽऽह अथेति । लघ्वहर्गणे सौरवर्षान्तःपात्यहर्गणे अपिशब्दात् करणात् साधिताहर्गण इत्यर्थः । एवमभीष्टवारार्थमहर्गणश्चेत् सैको निरेकस्तदा 'रविगुणैस्ति-थिभि'-रित्यादिना चन्द्रसाधने याः शुक्लादिगततिथयस्ताः सैका निरेकाः कार्या इत्यर्थः । एतादृशाश्चन्द्रसाधने तिथय उपयुक्ताः । बृहदहर्गणे एका-न्तरं तदा लघ्वहर्गणे किमित्यनुपातेन बृहदहर्गणभक्तलघ्वहर्गणफलमेव वारसंवादार्थम् । लघ्वहर्गणे हीनं युतं कार्यमिति निरासायैवकारः । अह-र्गणस्यैकान्तरस्यात्रापि सिद्धत्वादिति ध्येयम् । न तु लघ्वहर्गणानयनज्ञा-तमवमशेषं स्वेष्टदिनकरणार्थं कल्पावमयुतहीनं कार्यम् । तत्र तस्या-वश्यं चतुःषष्ट्यल्पत्वात् कल्पावमहीनमवमशेषं कथं स्यादत आह सैक-मित्यादि । तदा यदा चन्द्रसाधनार्थं तिथयः सैका निरेकास्तदेत्यर्थः । अवमाद्यम् । लघ्वहर्गणानयने चतुःषष्टिभक्तं यद्दिनाद्यवमशेषं क्रमेण सैकं निरेकं कार्यम् । चः समुच्चये । तेन लघ्वहर्गणस्तिथयोऽवमशेषं त्रितयमपि सैकं निरेकं कार्यम् । न त्ववमशेषं बृहदर्गणोक्तविशेषेण कल्पावमयुत-हीनं कार्यं विशेषस्य बलवत्त्वात् । अत्र यदि त्ववमशेषं सैकं चतुःष-ष्टेरन्यूनं तदा चतुःषष्टितष्टं कार्यम् । गतावमफलमेकयुतं वास्तवगताव-मज्ञानार्थं न त्वहर्गणसाधनार्थम् । एवमवमशेषमेकेन हीनं न तदाऽवमशेषे चतुःषष्टिर्योज्या ततो निरेकम् । गतावमफलं च तद्वास्त-

बद्यानार्थमेकहीनं न त्वहर्गणसिद्ध्यर्थमित्यप्युक्तप्रायं ध्येयम् । एतादृशावमशेषेण "स्वनगभागयुतेन" इत्याद्युक्तं चन्द्रफलमानेयम् । ननु यदाऽधिमासश्चैत्रादीष्टकालमध्ये स्यात् तदा यदाद्योऽधिमासस्तन्मासस्य षष्टिदिनात्मकत्वेनैकमासत्वादिष्टकाले पूर्वरीत्याऽहर्गणसाधितग्रहास्तत्काले बृहदहर्गणसाधितग्रहैर्न तुल्या भवन्ति । बृहदहर्गणेऽधिमासगणनाभावेन षष्टिदिनात्मकैकमासस्याङ्गीकारादेकत्र निर्णीतः शास्त्रार्थोऽपरत्र भवतीति न्यायान्मासद्वयाग्रहाच्च । किञ्च षष्टिदिनात्मकमासकाले उत्तरार्धपूर्वागताहर्गणानामेव सिद्धिरित्युत्तरोत्तरमहर्गणव्याघातोऽत आह तथेति । यथा लघ्वहर्गणे बृहदहर्गणोक्तकल्पावमयुतहीनावमशेषरूपविशेषं विहाय सैकं निरेकमवमशेषमिति विशेषोऽङ्गीकृतस्तथेत्यर्थः । चैत्रादीष्टकालयोर्मध्ये वक्ष्यमाणलक्षणाक्रान्ताधिमासपातश्चेत् तदा तस्य तिथीस्त्रिंशदनधिका अधिका गृहीत्वोक्तप्रकारेण लघुः सौरवर्षैकावधिरहर्गणः सुधिया गणकेन कार्यः । एवं च नोक्तदोष इति भावः । अत्र सुधियेति हेतुगर्भः । यत उक्तन्यायेनापि बृहदहर्गणानयनेऽधिमासो गतमासयोजनेन ग्राह्यः । लघुरिति पदोपादानादिति स्पष्टमुक्तमिति ध्येयम् ।

अत्रोपपत्तिः । सैकनिरेकत्वरूपविशेषस्याहर्गणसामान्येन सिद्धत्वात् लघ्वहर्गणेऽपि सैकत्वं निरेकत्वं तद्वशाच्चन्द्रसाधने तिथिष्वपीति युक्तम् । अथ तद्द्वितीयावमशेषं चतुःषष्टिचान्द्रैरेकोऽवमस्तदैकचान्द्रेण किमित्यनुपातेन समच्छेदत्वाच्चैकयुतमेकहीनं कार्यमिति सिद्धम् । अत्र यद्यप्यवमानयनानुरोधात् स्वीयकराभ्रतुरङ्गलवयुतैको युतो हीनश्च कार्यः । चतुःषष्टिचान्द्रैः संपूर्णावमपातात् तथाऽऽप्याचार्यैरेकस्य चान्द्रदिनस्य कराभ्रसप्तांशः स्वल्पान्तरेणोपेक्षित इति मन्तव्यम् । लघ्वहर्गणस्य सौरैकवर्षान्तःपातित्वात् तदानयने सौरवर्षादेरूर्ध्वमधिमासानयनाभावेन मध्येऽधिकमासपातेऽपि तद्ग्रहणेऽहर्गणस्य त्रिंशाद्दिना-

न्तरत्वं स्यादतो लघ्वहर्गणानयने चैत्रादिगततिथिगणे पतिताधिमासतिथयोऽपि ग्राह्याः । किञ्च अधिमासस्य चान्द्रत्वेनान्तःस्यत्वादिष्टकाले चैत्रादितः संपूर्णाश्चान्द्रदिवसा ग्राह्या इति तं विना तज्ज्ञानाभावात् तिथयो ग्राह्या एवेति बालैरपि बुध्यत इति किं चित्रमत एव बृहदहर्गणे तदानयनेन तत्काले एकाधिकाधिकमासरूपलब्धेः सिद्धत्वाच्च गतमासयोजनेन तद्योजनम् । अधिमासयोजनेन तद्योजनस्य सिद्धत्वाच्चिरवद्यम् ॥ २॥

इदानीमन्यदाह ।

स्पष्टाऽधिमासः पतितोऽप्यलब्धो
यदा यदा वाऽपतितोऽपि लब्धः ।
सैकैर्निरेकैः क्रमशोऽधिमासै-
स्तदा दिनौघः सुधिया प्रसाध्यः ॥ ३ ॥

कृत्वा युतोनं क्रमशोऽधिशेषं
दिनीकृतैः कल्पभवाधिमासैः ।
सैकान्निरेकान्मधुयातमासाँ-
स्ततः प्रसाध्यौ खलु पुष्पवन्तौ ॥ ४ ॥

वा. भा.—अथाहर्गणानयने योऽधिमास आगच्छति स मध्यममानेन यदा स्पष्टोऽधिमासः पतितः । अथ चाहर्गणानयने न लब्धस्तदा लब्धाधिमासान् सैकान् कृत्वाऽहर्गणः साध्यः । तदा यदधिमासशेषमागतं तच्च युतं कार्यम् । कैः । दिनीकृतैः कल्पभवाधिमासैः । तथा चैत्रादिमासान् सैकान् कृत्वा चन्द्रार्कौ साध्यौ । यदा वाऽपतितोऽपि लब्धस्तदाऽस्माद्विपरीतम् । एतदुक्तं भवति । यदा स्पष्टोऽधिमासः पतितस्तदाऽनब्धोऽपि ग्राह्यः । यदा न पतितस्तदा लब्धोऽपि न ग्राह्यः । तदाऽधिमासशेषं कल्पाधिमासैर्दिनीकृतैर्यथाक्रमं युतोनं कार्यम् । यतस्त्रिंशता दिनैर्दिनगणोऽन्तरितः । तस्मादधिमासशेषाच्चन्द्रार्कौ साध्यौ । तदा चैत्रादयो मासाः सैका निरेकाश्च ग्राह्याश्चन्द्रार्कसाधने ॥ ३–४ ॥

**मरीचिः**—ननु यदाधिमासपातकालानन्तरकाले निकट एवाहर्गणानयने रविदिनैर्भागैः पतिताधिमासो लब्ध एकाधिकत्वेन लभ्यते यदा च पतिताधिमासकालात् पूर्वनिकटकालेऽहर्गणानयने कल्परविदिनभागैनैकाधिका लब्धिर्लभ्यते तदोक्तप्रकारेण साधितावहर्गणौ क्रमेण त्रिंशदूनत्रिंशद्विनाधिकौ भवतः। तत्र क्रमेणाधिमासतदभावयोर्वस्तुतः सत्त्वाद्दित्यत उपजातिकया तत्र विशेषमाह स्पष्ट इति। तिथ्यादिपत्रस्य स्पष्टत्वेन सत्त्वात् तत्राधिमासः स्पष्टमानेन भवति। तथा च यदाऽधिमासः स्पष्ट उक्तलक्षणः पतितः। यत्कालेऽहर्गणः साध्यते तत्पूर्वनिकटे भवति तदाऽहर्गणसाधनेऽलब्धः। यथाऽधिमासपातकालात् पूर्वं फलं तदेवाधिमासपातकालानन्तरं फलं न त्वेकाधिकमिति कदाचित्। यदा वाऽधिमासपातकालात् पूर्वं निकटकालेऽहर्गणसाधनेऽपतितः स्पष्टमानेनोक्तलक्षणः पूर्वं न जातोऽपि लब्धोऽधिमासानयने पूर्वागताधिमासफलमेकाधिकं कदाचित् तदा तत्र क्रमशोऽधिमासानयनेऽप्राप्तः प्राप्तैकाधिमासक्रमेणेत्यर्थः। सैकैरेकहीनैरधिमासैः कल्पसौरदिनभक्ताप्तगताधिमासैर्दिनौघो बृहदहर्गण उक्तरीत्या सुधिया गणकेन प्रसाध्यः। न तु मया गताधिमासैः। सुधियेति हेतुगर्भः। यतस्तत्रैकमासान्तरस्य प्रत्यक्षसिद्धत्वेन यथागताधिमासैरहर्गणानयनद्वारा ग्रहास्तिथ्यादिपत्रं च कथं संचरेत्। एकमासान्तरेणेष्टकालात् पूर्वापरकाले च संघटेदित्यवश्यमयं विशेषः कार्यः। अन्यथाऽभीप्सितकाले ग्रहादिसिद्धिर्न स्यादिति ध्येयम्।

अत्रोपपत्तिः। ग्रहाः खलु स्पष्टगत्या भ्रमन्ति। न वस्तुतो मध्यममानमस्ति। यन्मध्यममानं तद्गणनाव्यवहारोपयिकतया गौणं कल्पितम्। स्पष्टमानस्यैकरूपत्वाभावेन तदनुरोधाद्ग्रहसाधनस्य नियतमानं विनाऽसाध्यत्वात्। तथा च कल्पितमध्यममानेन प्रत्यक्षसंवादाभावेन पर्यवसानत्वाभावादनियतस्पष्टमाने प्रत्यक्षसंवादेन पर्यवसानं

युक्तम् । अन्यथा संहिताजातकादौ सूर्यबुधशुक्राणां भिन्नराशिस्थोक्तेरप्रसिद्धेः ।

"दृष्टे चन्द्रे सिनीवाली नष्टे चन्द्रे कुहूः स्मृता" ।

इति वचनस्य मध्यमामावास्याकाले दर्शनादर्शनयोरसत्त्वादप्रामाण्यापत्तेश्च । एवं सत्यभीष्टकाले पूर्वस्पष्टमानेनाधिमासपातेऽप्यहर्गणानयनेऽनुपातेन मध्यममानाभिप्रायेणाधिमासपाताभावान्मध्यममानेनोक्तरीत्या सिद्धोऽप्यहर्गणोऽभीष्टकालमधिकृत्य साधितोऽपि पूर्वमासो जातः । स्पष्टमानेनैकमासस्याधिकत्वदर्शनादतोऽभीष्टकाले मध्यममानेनाहर्गणसिद्ध्यर्थमनुपातसिद्धगताधिमासा एकयुताः कार्याः । एकाधिकमासग्रहणेनाभीष्टदैवसिकाहर्गणसिद्धिः स्वतः सिद्धत्वात् । न चैवं बृहदहर्गणसाधनेऽप्यधिकमासयोजनस्य युक्तिसिद्धत्वेन लघुर्दिनौघ इत्यनेन पूर्वमत्र निषेधः कथं कृत इति वाच्यम् । निषेधस्यैतत्स्थलभिन्ने सावकाशत्वात् । अत एव सुधियेति पूर्वमुक्तम् । निषेधस्य गतमासयोजनत्वेनोक्तत्वाच्च क्षतिः । एवमभीष्टकालादये स्पष्टमानेनाधिमासपातात् पूर्वमधिमासपाताभावेऽप्यनुपातसिद्धगताधिमासा एकहीनाः कार्याः । एतेन मध्यममानमदूरं विप्रकर्षेण स्पष्टकालमनुमापयति । न तु तत्स्वतः कार्यक्षममित्यपि सूचितमत उपपन्नं स्पष्ट इत्यादि ॥ ३ ॥

मरीचिः—ननु यदाऽधिमासस्यैकान्तरं तदाऽधिशेषस्य त्वागताधिमासशेषत्वात् स्पष्टाधिमासवशाद्धिशेषाभावाच्च 'कोट्याहतैर्यद्रवभै'-रित्यादिश्लोकद्वयेनार्कचन्द्रौ कथं साध्यावित्यतस्तद्विशेषं तत्साधने चैत्रादिगतमासग्रहणविशेषं चोपजातिकयाऽऽह कृत्वा इति । ततो हेतोः । यत आगताधिमासाः सैका निरेका अत इत्यर्थः । अधिमासानयने यज्जातमधिशेषं तत् तु कल्पोक्ताधिमासैः "लक्षाहता दैवनवेषुचन्द्राः"-इत्युक्तैर्दिनौघहतैस्त्रिंशद्गुणैः क्रमशः सैकनिरेकलब्धाधिमासक्रमेणेत्यर्थः । युतोनं कृत्वा । सिद्धमधिशेषं ग्राह्यम् । अत्र योजनेनाधिशेषं

कल्पसौरदिनाधिकं चेत् तत् तष्टम् । अधिशेषं तदूनं तु भवति चेत् सौरा दिवसाः कल्पोक्ता योज्यास्ततो दिनीकृत्याधिमासा हीना इति स्वत उक्तरीत्या ध्येयम् । ननु तथाऽपि 'कोट्याहतैर्यद्रवभै'-रित्यादिना सूर्यचन्द्रसाधनं तत्र व्यभिचरति । तथा हि षट्त्रिंशदधिकपञ्चदशशतमितशालिवाहनशके १५३६ शुक्लादिमासगणनया वैशाखकृष्णषष्ठ्यां भौमे सूर्यचन्द्रज्ञानार्थं प्रथमं कल्यहर्गणः साध्यते । कलिवर्षाणि ४७१५ लब्धाधिमासाः १७३९ शेषम् ५४२८५000000 । अत्र पूर्वमधिमासपाताभावादहर्गणार्थमुक्तरीत्या गताधिमासा निरेकाः १७३८ । अन्यथा तदयाधिकज्येष्ठकृष्णषष्ठ्यां गुरावहर्गणः स्यात् । चन्द्राहर्गणः १७४९५९0 । गतावमानि २७३७६ । शेषम् ४७८0३0५00000 । कल्यहर्गण इन्द्राकृतियमात्यष्टिमितः १७२२१४ । अस्मादनुपातेन भगणाद्यौ सूर्यचन्द्रौ । सूर्यः ४७१५ । २0 । १0 । २१ । चन्द्रः ६३0३४ । ८ । २३ । ४८ । २५ । अथ प्रकारान्तरेणानयोः साधनार्थमधिशेषं प्रयुतघ्नशरगजयमवेदेषुमितम् ५४२८५000000 । अधिदिनै—४७७९९000000 रूनं जातं प्रयुतघ्नषड्जवेदाङ्गमितम् ६४८६00000000 अधिशेषं तदुपयुक्तम् । अथ चैत्रादियातास्तिथयः पञ्चाशत् ५0 । एतदंशाः सूर्यस्य विश्वगुणाश्चन्द्रस्यांशाः ६५0 । एतावधिशेषाच्छशिमासभक्ते फलेनांशादिना ७ । २७ हीनौ । सू ४९ । ५२ । ४३ चं ६४९ । ५२ । ४३ । अवमशेषात् सूर्यस्य धनफलं कलाद्यम् । १७ । ३८ चन्द्रस्य २३५ । ४७ । स्वफलयुतौ सूर्यचन्द्रौ राश्याद्यौ सू १ । २0 । १0 । २१ । चं ९ । २३ । ४८ । ३0 । अनयोरहर्गणसाधितयोरेकराश्यन्तरमिति स्पष्टो व्यभिचारः । एवमधिमासपातोत्तरकाले यदा गणितेनैकाधिकमासो न लभ्यते तत्रापि व्यभिचारो बोध्यः । तत् स्थलं त्वेकोनपञ्चाशद्युतपञ्चदशशतशके १५४९ श्रावणशुक्लाष्टम्यां गुरौ प्रसिद्धम् । अहर्गणानीतसूर्यस्य ४ । १0 । १२ । २0 । तत्प्रकारेणानीतस्य चन्द्रस्य च ३ । १0 । १२ । २0 । विसंवादादत

आह सैकाविरेकानित्यादि । अहर्गणार्थं चैत्रादिगतमासा ये गृहीतास्तानधिमासवत् सैकान् निरेकान् कृत्वा चैत्रादियातास्तिथयो ग्राह्या न त्वहर्गणवद्यथागताः । आभ्यां पुष्पवन्तौ ।

"एकयोक्त्या पुष्पवन्तौ दिवाकरनिशाकरौ" ।

इत्यभिधानात् सूर्यचन्द्रौ खल्वसंशयं कोट्याहतैरित्यादिश्लोकद्वयोक्तप्रकारेण प्रसाध्यौ । पूर्वाहर्गणसाधिताभ्यां संवादेन व्यभिचाराभावादिति भावः । यथोक्तस्थले चैत्रादियातास्तिथयो विंशतिमिताः २० । त्रयोदशगुणाः । पृथक् २६० । अधिशेषफलेन ७ । १७ हीनौ । सू १९ । ५२ । ४३ । चं ८५९ । ५२ । ४३ स्वफलेन धनेन सू १७ । ३८ । चं २३५ । ४७ । युतौ राश्यादिकौ सूर्य—० । २० । १० । २१ चन्द्रौ ८ । २३ । ४८ । ३० । अहर्गणानीतावेव । एवं द्वितीयस्थलेऽपि चैत्रादिगततिथयः सप्तपञ्चाशदधिकशतमिताः २५७ । आभ्यः सूर्योऽहर्गणानीत एव धूलीकर्मणा साधितः ४ । १० । १२ । १० ।

अत्रोपपत्तिः । अधिमासस्य यदैकमासान्तरं तदा सिद्धाधिशेषं स्वाभीष्टकालमधिकृत्य साधितमपि स्वाभीष्टकालात् तदनुरोधेनैकचन्द्रमासान्तरेण पूर्वमासेऽपरमासे वा सिद्धमतः स्वेष्टकालीनकरणार्थमधिशेषं कल्पचान्द्रदिनैः कल्पाधिमासास्तदा त्रिंशच्चान्द्रदिनैः किमित्यनुपातेनानीतैकचान्द्रमासाधिशेषं सौरम् । कल्पसौरदिनैः कल्पचन्द्रास्तदाऽनेन सौरेण किमित्यनुपातेन चान्द्रं कृत्वा क्रमेणाधिशेषे युतोनं कार्यम् । तत्र गुणहरयोः कल्पचान्द्रदिनयोर्नाशे त्रिंशगुणस्य दिनत्वपर्यवसानात् समच्छेदत्वाच्च कृत्वेत्याद्यर्धमुपपन्नम् । अथात्र सूर्यचन्द्रसाधनार्थं चैत्रादितिथयोऽहर्गणानयनोपयुक्ता गृह्यन्ते तदा यथा सैकनिरेकागताधिमासग्रहणं विनाऽहर्गणस्त्रिंशद्दिनान्तरितः स्वाभीष्टकालात् तथा सूर्यचन्द्रावपि तद्दिने भवतो न स्वेष्टकालकरणार्थम् । चैत्रादितिथयोऽहर्गणानयनाङ्गीकृता एव त्रिंशद्दिनैर्युतोनाः सन्तः क्रमेण

स्वेष्टकाले सूर्यचन्द्रसाधनार्थं चैत्रादितिथयो गृहीता भवन्ति एकमासान्तरत्वात् । अत उपपन्नं सैकाधिरेकानित्यादि । अहर्गणसाधनेऽप्यधिमासानां सैकनिरेकत्वेन चैत्रादिगतमासा एव सैका निरेकाः कृता इत्येव भवतीति न विपरीतिः । अत एव यदाऽधिमासः पतितो गणितेन च प्राप्तस्तदा स्वतः सिद्धोऽहर्गणोऽभीष्टकाल इति तत्र सूर्यचन्द्रसाधनार्थमधिमासत्वेऽपि चैत्रादिगतमासा न सैका इति सुगमम् ॥४॥

इदानीं शुद्धौ विशेषमाह ।

शुद्ध्यागमे त्वपतितोऽपि स लभ्यते चे-
च्छुद्ध्या तदा खदहनैर्युतया दिनौघः ।
एतद्विदन्ति सुधियः स्वयमेव किन्तु
बालावबोधविधये मयका निरुक्तम् ॥ ५ ॥

वा. भा.—शुद्ध्यानयने स स्पष्टोऽधिमासोऽपतितोऽपि यदि लभ्यते तदा सोऽपि न ग्राह्यः । तस्मिन्नगृहीते त्रिंशदधिका शुद्धिर्भवति । तयाऽहर्गणस्तदा कर्तुं युज्यते । स्पष्टमासस्य ग्रहणात् ॥ ५ ॥

मरीचिः—ननु यदा शुद्ध्यानयनेन चैत्रेऽधिमासः पतितः स्पष्टमानेनापतितस्तदा प्रत्यब्दशुद्ध्या ग्रहानयनेऽनया रीत्या व्यभिचारः । तथा हि नवाधिकपञ्चदशशतमितशके १५०९ अब्दपः ३ । ३३ । १८ । शुद्धिः ० । ३३ । १८ । अवमघटिकाः १२ । ४२ । क्षेपदिनानि १३ । २० । ६ । कार्त्तिकशुक्लपौर्णमास्यां रवौ चैत्रादिगततिथयश्चतुष्पञ्चाशदुत्तरशतद्वयम् २५४ । तथाऽधिमासस्य तिथौ गृहीत्वेत्यनेन वैशाखपतिताधिमासस्यापि ग्रहणात् । तत उक्तप्रकारेणाहर्गणः २४८ । २६ । ४२ । अस्मादुक्तप्रकारेणार्कः ८ । ४ । ५२ । ८ बृहदहर्गणनीतसूर्येणानेन ७ । ६ । २ । २६ न सम इति स्फुटो व्यभिचारः । न चाधिमासग्रहणेन सहजमेवैकराश्यन्तरमिति । तदवहे सूर्यस्य ७ । ५ । १८ । २ । आगतत्वान्न दोष इति वाच्यम् । एवमपि वैशाखाधिमासशुक्लप्रतिपदि

बुधे लब्धाहर्गणात् २९ । २६ । ४२ साधितसूर्यस्य ० । २९ । ३ । १६ । बृहदहर्गणानीतसूर्येण ११ । २८ । १३ । २० विसंवादात् तत्र स्फुटो व्यभिचारः । तथाऽधिमासस्य तिथीर्गृहीत्वेति॥ विशेषणस्य व्यर्थत्वापत्तिश्चेत्यतः सिंहोद्धृतयाऽऽह शुद्ध्यागमे इति । शुद्ध्यानयने खरामैर्भक्ते स्पष्टमानेनापतिताधिमासोऽपि ॥ सोऽधिमासश्चेद्यदि लभ्यते । अपतितोऽपि न लब्धः पतितो वा लब्धस्तन्निवारणार्थं चेदित्युक्तम् । तदा तद्रूपे यथागतशुद्ध्या त्रिंशद्युतया 'चैत्रसितादिगतः' इत्याद्यनेनाहर्गणः साध्यो न तु यथागतया । तथा चोक्तस्थले न व्यभिचार इति भावः । यथा प्रथमस्थले तिथिगणः २५४ त्रिंशद्युतशुद्ध्या- ३० । ३३ । १८ ऊनः २२३ । २६ । ४२ । अतोऽहर्गणः २२० । २६ । ४२ । अस्मात् सूर्योऽयं ७ । ७ । ५६ । १९ । बृहदहर्गणानीतसम इति । द्वितीये तु 'यावत् तिथ्यः' इत्युक्तेन पूर्ववर्षसमाप्तेरेतादृशशुद्ध्या ३० । ३३ । १८ ग्रहानयनाप्रसङ्ग इति न क्षतिः । ननु यथेदमुक्तं तथा यदा स्पष्टाधिमासः पतितोऽपि शुद्ध्या नयने नागतस्तदा यथागतशुद्धिस्त्रिंशद्युतचैत्रादितिथिगणे ऊना कार्या ततोऽहर्गणः साध्योऽन्यथोक्तरीत्या व्यभिचारापत्तेरित्ययं विशेषः कथं नोक्तः । न चास्योक्तवैपरीत्येनोक्तप्रायत्वादिति वाच्यं विपरीतस्यापि सुवचत्वात् । त्रिंशदूनशुद्धिसंभवेनैतद्विशेषकथनस्योक्तविशेषापेक्षयाऽऽवश्यकत्वाच्चेति चेत् । न । अव्यवहितगतत्रेतायुगस्य सहस्रनृपयम–२१६०००मितगतवर्षकालमारभ्यागामित्रेतायुगचरणस्य सहस्रषट्नवाग्नि–३९६०००मितगतवर्षकालपर्यन्तं तादृशस्थलाप्रसक्तेः । ननु तथाऽपि कल्पावच्छिन्नकाले तस्य प्रसिद्धत्वात् तदुक्तस्यावश्यकत्वात् । अन्यथा ब्रह्मगतायुर्विचारश्लोकस्य व्यर्थत्वापत्तेरत आह एतदिति । एतत् । यदा स्पष्टमानेनाधिमासः पतितोऽपि शुद्ध्यानयने न लभ्यते तदा त्रिंशता ऊनया शुद्ध्याऽहर्गणः साध्य इति विशेषरूपं प्रमेयम् । सुधियस्तीक्ष्णबुद्धयः स्वयमेव मत्कथनं

विना स्वबुद्ध्या विदन्ति जानन्ति । उक्तविशेषवैपरीत्येनाल्पबुद्धीनामपि स्वतस्तज्ज्ञेयत्वादिति भावः । एवं तर्ह्यभीष्टेत्यादि शुद्ध्यागमे इत्याद्यन्तग्रन्थोक्तविशेषस्यापि तेषां स्वतो ज्ञेयत्वात् तत्कथनं व्यर्थमत आह किन्त्विति । मयका । " अव्ययसर्वनाम्नामकच् प्राक् टेः " इति सूत्रेण मयेत्यस्य सुबन्तस्याकच्प्रत्यय इति मयैवोक्तं न पूर्वाचार्यैरिति स्वप्राधान्यद्योतनार्थं मयकेत्युक्तम् । बालावबोधविधये बालानां स्वत उपपत्त्यज्ञानामेतद्विशेषस्यावबोधो भवतु तदर्थम् । निरुक्तं प्रोक्तम् । अन्यथ तेषां वासनानभिज्ञतयोक्तस्थले ग्रहगणितासंवादादतिव्याकुलत्वं स्यात् । यद्वा नन्वभीष्टवारार्थमित्यादिविशेषाः ब्रह्मगुप्तश्रीपतिलल्लादिभिः प्राचीनैरनुक्तत्वात् त्वदुक्ता अप्रमाणा भवन्त्यत आह एतदिति । अभीष्टवारार्थमित्याद्युक्तविशेषप्रमेयम् । तथा चैतद्विशेषाणां स्पष्टत्वेन स्वतः सुधीज्ञेयत्वात् । पूर्वाचार्यैर्नोक्ता न तु वासनाशून्यत्वेनोपेक्षिताः । एवं चेत् । त्वया किमर्थमुक्ता अत आह किन्त्वित्यादि । वस्तुतस्तु नन्वेते विशेषाः प्राचीनग्रन्थानुक्तत्वेन किमर्थमुक्ता अत आह किन्त्वित्यादि । किन्तु एतत् प्रमेयं मयैवोक्तम् । तथा चैतत् कथनं व्यर्थं नेति भावः । ननु प्राचीनानुक्तत्वेन न त्वदुक्तमप्यप्रमाणमत आह एतदिति । एतत् । मदुक्तविशेषप्रामाण्यं सुधियः स्वयमेव बुद्ध्या मनसि जानन्ति । तथा च मया वासनाभिज्ञतयैतद्विशेषाणामुक्तत्वान्मदुक्तप्रामाण्ये सुधियः स्वतः प्रमाणमिति न क्षतिरिति भावः ।

अत्रोपपत्तिः । यदा स्पष्टमानेन स्पष्टचैत्रे नाधिमासः पतितः शुद्ध्यानयनेऽधिकः फले लब्धश्चेत् तदा स्पष्टचैत्रस्य मध्यममानेनाधिकत्वम् । स्पष्टचैत्रात् स्पष्टाग्रिममासस्य वैशाखाधिकाख्यस्य वैशाखाख्यस्य वा मध्यममानेन चैत्रत्वमतो गणितागता शुद्धिः प्रसिद्धचैत्राग्रिममासस्योक्ताख्यस्य मध्यममाने य आरम्भकालस्तस्मान्मध्यममेषसंक्रमणकालपर्यन्तमन्तरं रूपम् । तस्माच्छुद्ध्यादिकालरूपमध्यमचैत्रादितो गतमास-

ज्ञानार्थं प्रसिद्धस्पष्टचैत्रादिगणनागृहीतगतमासा निरेकाः कार्यास्तत्र यथागतशुद्धिरवैकमासदिनात्मकसंख्यया त्रिंशन्मितया लाघवार्थं योजिता। तादृशशुद्ध्या प्रसिद्धचैत्रादितिथिगणो हीनश्चेन्मध्यमसौरवर्षान्तात् तिथिगणो गृहीतः स्यात् । अत एव "गताब्दाधिमासान्तरम्" इत्यादिना ऽब्दपसाधने मध्यममानेन गताधिमाससंख्याप्रयोजनम् । त्रिंशदूनत्वेनोक्तरूपशुद्धेरावश्यकत्वाच्च दिनौघ इत्युक्तम् । तेन वास्तवपतिताधिमाससंख्याज्ञानार्थमागताधिमासा निरेकाः कार्याः । ननु गणितार्थमिति द्योतितम् । एतद्विषयः स्पष्टशुद्ध्यानयने लब्धाधिमाससंख्या मध्यमशुद्ध्यानयनागताधिमाससंख्याया निरेका भवति तदैव एतदर्थं स्पष्टचैत्रादिस्पष्टमेषसंक्रमरूपसौरवर्षाद्योरन्तरकालरूपा स्पष्टशुद्धिर्ज्ञेया । तत्राव्यवहितगतत्रेतायुगचरणस्य सहस्रघ्नपयम-२१६०००मितगतवर्षकालमारभ्यागामित्रेतायुगचरणस्य सहस्रघ्नशनवरामभितम्३६६००० गतवर्षकालपर्यन्तं सौरवर्षादौ सूर्यस्य तुलादिकेन्द्रत्वेन मन्दफलस्य धनत्वान्मध्यमसौरवर्षादितः स्पष्टसौरवर्षादेर्मन्दफलकालेन पूर्वं सम्भवः । अतोऽनुपातेन ज्ञातरविमन्दोच्चतः केन्द्रद्वारा स्पष्टाधिकारोक्तप्रकारेणानीतमन्दफलाद्यदि कल्पसौरांशैः कल्पचान्द्रदिनानि तदा मन्दफलांशैः कानीत्यनुपातेन ज्ञातदिनादिना षष्ट्यधिकशतत्रयसौरांशैरेकवर्षे ऽवमघटिका— ४८ । २२ । १ । ३० स्तदा मन्दफलांशैः किमित्यनुपातेन ज्ञातावमघटीभिश्चागतशुद्धिः क्रमेणोना युक्ता च स्पष्टमेषादिसंक्रमणरूपस्पष्टवर्षादौ शुद्धिः । तत्र यदा शुद्धिरूना न भवति तदा लब्धाधिमासेभ्य एकाधिमासग्रहणेन तत्त्रिंशद्दिनयुतशुद्धिरूना भवतीति स्पष्टशुद्ध्याभिप्रायेण मध्यमानीताधिमासा निरेका भवन्तीति सिद्धम् । तथा च यथा सांप्रतमीदृशार्कमन्दोच्चा-२ । १८ । ० । ० नीतमन्दफला-२ । ८ । ३० नीतचन्द्रदिना-२ । १२ । २७ अवमघटी-५१७संस्कारोत्पन्नदशपलाधिकद्वादशघटीयुतदिनद्वय-२ । १२ । १० रूपदिनादेरानीतमध्यमशुद्धिरूना

तदा स्पष्टशुद्ध्या त्रिंशदूनया स्पष्टाधिमासपाताभावेऽपि मध्यशुद्ध्या मध्यमाधिमासपात इति विषयः सिद्धः । अत एव यदा मध्यमानीतशुद्ध्या नाधिमासपातस्तदा स्पष्टशुद्ध्या तदूनया सुतरां मध्यसौरवर्षादितः पूर्वं स्पष्टसौरवर्षादेः सिद्धत्वायुक्तकाले स्पष्टाधिमासः पतितः शुद्ध्यानयने नागत इत्यस्यासिद्धिः । यदा तु भ्रयिमत्रेतायुगचरणगतसहस्रघ्नपञ्चरामभितवर्षकालमारभ्य लक्षघ्नशरवेदवर्ष ४५०००००मध्ये मेषादिकेन्द्रत्वेनर्णमन्दफलद्वारा मध्यवर्षादितः स्पष्टसौरवर्षकालस्यापि सत्त्वान्मध्यममानेनालब्धोऽधिमासः स्पष्टमानेन कदाचित् पतितः स्यात् तदा चैत्राधिमासस्य मध्यमत्वेन शुद्धचैत्रत्वात् । तदादितो गततिथिगणहार्थं प्रसिद्धाधिमासोत्तरचैत्रादिगणनागृहीतगततिथयस्त्रिंशत्तिथियुताः कार्या इति सिद्धम् । वास्तवगताधिमाससंख्याज्ञानार्थं शुद्ध्यानयनानीताधिमासाः सैका इदमाचार्यैः कालान्तरीयत्वेनोपेक्षितं सुधीज्ञेयत्वाच्चेत्यलं विस्तरेण ॥ ५ ॥

इदानीमधिमासस्य क्षयमासस्य च लक्षणमाह ।

असंक्रान्तिमासोऽधिमासः स्फुटं स्याद्-
द्विसंक्रान्तिमासः क्षयाख्यः कदा चित् ।
क्षयः कार्त्तिकादित्रये नान्यतः स्यात्
तदा वर्षमध्येऽधिमासद्वयं च ॥ ६ ॥

**वा. भा**–यस्मिन् शशिमासेऽर्कसंक्रान्तिर्नास्ति सोऽधिमास इति प्रसिद्धम् । तथा यत्र मासे संक्रान्तिद्वयं भवति स क्षयमासो ज्ञेयः । यतः संक्रान्त्युपलक्षिता मासाः । अत एकस्मिन् मासे संक्रान्तिद्वये जाते सति मासयुगलं जातम् । स क्षयमासः कदाचित् कालान्तरे भवति । यदा भवति तदा कार्त्तिकादित्रय एव । तदा क्षयमासात् पूर्वं मासत्रयान्तर एकोऽधिमासोऽपरश्च मासत्रयान्तरितोऽन्यश्चासंक्रान्तिमासः स्यात् ।

अत्रोपपत्तिः । चन्द्रमासप्रमाणमेकोनत्रिंशत् सावनदिनान्येकत्रिं-

शद्घटिकाः पञ्चाशत् पलानि २९ । ३१ । ५० । तथाऽर्कमासस्त्रिंशद्दि-नानि षड्विंशतिर्घटिकाः सप्तदश पलानि ३० । २६ । १७ । एतावद्भि-र्दिवसै रविर्मध्यमगत्या राशिं गच्छति । यदाऽर्कगतिरेकषष्टिः कलास्तदा सार्धैकोनत्रिंशता दिनै २९ । ३० राशिं गच्छति । अतश्चान्द्रमासादल्पो-ऽर्कमासस्तदा स्यात् । एवं रविमासस्य परमाल्पता २९ । २० । ४० । सा चैकषष्टिर्गतिर्वृश्चिकादित्रयेऽर्कस्य । स ईदृशोऽल्पोऽर्कमासो यदा चान्द्र-मासस्यानल्पस्यान्तःपाती भवति तदैकस्मिन् मासे संक्रमणद्वयमुपपद्यते। अत उक्तं क्षयः कार्त्तिकादित्रय इति । पूर्वं किल भाद्रपदोऽसंक्रान्तिर्जा-तस्ततोऽर्कगतेरधिकत्वान्मार्गशीर्षो द्विसंक्रान्तिस्ततः पुनर्गतेरल्पत्वाच्चै-त्रोऽप्यसंक्रान्तिर्भवति । ततो वर्षमध्येऽधिमासद्वयमित्युपपन्नम् ॥ ६ ॥

**मरीचिः**—ननु स्फुटमानेनाधिमासः पतितोऽपतितो वा कथं ज्ञेय इत्य-तोऽधिमासलक्षणं तत्प्रसङ्गात् । क्षयमासलक्षणं सविशेषं भुजङ्गप्रयातेनाह असंक्रान्तिमास इति। स्फुटोऽसंक्रान्तिमासोऽधिमासः स्यात् । तिथ्यादि-पक्षस्य स्पष्टमानेन सत्त्वात् । स्पष्टशुक्लादिप्रतिपत्पूर्वक्षणमारभ्याव्यवहि-ततदुत्तरस्पष्टामावास्यान्तिमक्षणपर्यन्तं कालविशेषः स्पष्टचान्द्रमासः। अत्र सूर्यस्य स्पष्टमानेनैकमेव स्वाधिष्ठितराश्यव्यवहितायिमराश्यादिस्थानसं चाररूपसंक्रमणं भवति। तदा चैत्रादिमासंसंज्ञाक्रमेणोक्तसंज्ञको मासः शुद्धः। यदि तत्र तद्रूपसंक्रमणाभावस्तदाऽयमशुद्धोऽधिकसंज्ञाव्यवहार्यः । तस्य चैत्रादिद्वादशराशिभ्योऽतिरिक्तत्वात् । एवं स्फुटो द्विसंक्रान्तिमासः । तत्र यदि तद्रूपसंक्रमणद्वयं तदाऽपि शुद्धमासलक्षणाभावादशुद्धः क्षयसं-ज्ञाव्यवहार्यः ।

"यस्मिन् मासे न संक्रान्तिः संक्रान्तिद्वयमेव वा ।
मलमासः स विज्ञेयः.......................... ।"

इति काठकगृह्यवचनेन मलत्वाभ्युपगमात् । तत्रासंक्रान्तिमास-स्याधिकत्वम् ।

"यस्मिन् दर्शस्यान्तादर्वागेकापरं दर्शम् ।
उल्लङ्घ्य भवति भानोः संक्रान्तिः सोऽधिमासः स्यात् ॥"

इति भुजबलभीमपराक्रमवचनेन—

"अमावास्यामहोरात्रे यदा संक्रमते रविः ।
स तु मासः पवित्रः स्यादतीते त्वधिको भवेत् ॥"

इत्यादिपुण्यवचनेन च युक्तम् । अत्रादिपुण्यवचने प्रथमपादस्य शुक्लादिदर्शान्तमास इत्यर्थः । अतीते मासेऽतीत इत्यर्थ इति ध्येयम् । द्विसंक्रान्तिमासस्य क्षयत्वम् ।

"तिथ्यर्धे प्रथमे पूर्वो द्वितीयेऽर्धे तदुत्तरः ।
मासाविति बुधैश्चिन्त्यौ क्षयमासस्य मध्यगौ ॥"

इति वचनेनैकमासद्विमासाभिधेयत्वाद्युक्तम् । ननु वर्षत्रयमध्येऽधिमासस्यावश्यं पतनं दृश्यते तथोक्तरूपक्षयस्य दर्शनाभावेन खपुष्पायितक्षयमासकथनं न युक्तमत आह कदा चिदिति । तथा चाधिमासवन्नियतकालाभावात् कालान्तरे तत्सम्भवप्रसिद्ध्योक्त इति भावः । ननु तथापि चैत्रादिसप्तस्वधिमासस्य यथा पातस्तथा क्षयमाससम्भवः केषु मासेषु भवत्यत आह क्षय इति । संक्रान्तिद्वययुक्तचान्द्रमासः कार्त्तिकादित्रये कार्त्तिकमार्गशीर्षपौषान्यतममासे । शुद्धमासाव्यवहिताधिमसंज्ञासम्भावनया कार्त्तिकाद्युक्तम् । अन्यथा स्वरूपासिद्धिरिति ध्येयम् । अन्यतस्तद्रहितमासेषु न स्यात् । यद्वा ननु चैत्रादिसप्तस्वधिमासपातदर्शनेऽप्यधिमासपतनविषयमासानामनुक्तत्वात् सर्वमासेष्वधिकसम्भवः । "सर्वेषु मासेष्वधिमासकः स्यात्" इति वसिष्ठोक्तेश्च । तथा क्षयस्यापीति कथं कार्त्तिकादित्रये इत्युक्तमत आह नेत्यादि । अन्यतः पारिभाषिकवर्त्तमानकालान्यकाले कार्त्तिकादित्रये इत्युक्तं न सम्भवति । तथा च वर्त्तमानकालानुरोधेन मासनिर्णयः कृतः । न तु कालत्वावच्छेदेनेति न क्षतिः । ननु

माकर्ष्यते तथा नीचेनाप्याकर्ष्यत इति त्वयोच्यते । तथा सति नीचसांनिध्ये न वक्रा गतिर्धनर्णवासनाप्रतिपादनं यन्मुनिभिरुच्यते तत्सर्वं त्वदुक्तनीचदेवतास्वीकारेण विरुध्यते । उच्चनीचदैवतयोस्तुल्यगतित्वेन विरुद्धदिग्जनितसमाकर्षणाद्ग्रहबिम्बस्वरूपमुन्मथ्येत निष्क्रियं वा प्रसज्जेत । किञ्चोच्चदेवतावशेनैवोपपद्यमानं ग्रहोर्ध्वाधरगमनं न स्वार्थं देवताद्वयं कल्पयति याम्योत्तरगतौ विक्षेपात्मिकायामेकस्य पातस्यैव कारणत्वेन कल्पितत्वात् । तस्मादिदमप्यसत् । किञ्च शनिकक्षोर्ध्वस्थस्य भचक्रस्य

"सममुडुभिरदृश्यैरङ्कितं दस्रभाद्यैः—"

इत्यनेनाभानप्रतिपादनं दृश्यमानानामश्विन्यादिनक्षत्राणां च चन्द्रकक्षास्थितत्वापादनं मुनिमतविरुद्धत्वादयुक्तत्वाच्चासत् । किञ्च भूमेराधाराकल्पनास्वीकरणं गणितशास्त्रप्रणेतृविरुद्धत्वादयुक्तम् । किञ्च गतेर्मन्दफलसाधने टीकाकारेण धनर्णव्यत्यास उक्तस्तत्र च मन्दकर्णवृद्धिह्रासयोः कारणत्वाभिधानं कृतं तदप्यसत् । किञ्च यष्टिसाधने शङ्कोचतो च यद्दूषणं दत्तं तद्युक्तिशून्यत्वादसत् । उच्छास्त्रं स्वच्छन्दं प्रवर्तमानानामेवमादीनि दूषणान्येव भूषणानि भवन्तीति गुणा एव तेषां वक्तव्यास्त एव दूषणाय प्रभविष्यन्ति । यथा सौरचान्द्रान्तरेऽधिकमासाः पूर्वैः स्वीकृतास्तथा त्वया सौरसावनान्तरे चान्द्रसावनान्तरे वा न स्वीकृता इति तवायं गुणः । उक्तयुक्तेस्तुल्यत्वादिति । नक्षत्रानयनं स्थूलसूक्ष्मभेदेन धर्मशास्त्रफलादेशशास्त्रोपयुक्तत्वाद्द्विविधमादृतम् । तत् तु तथैव त्वयाऽप्यादृतमिति महान् गुणो वैषम्यस्वीकारात् । रविचन्द्रयोगाद्योगः साधितस्तदाऽन्यग्रहयोगाद्योगाः कुतो न भवन्तीति नोक्तमिति गुणः । ग्रहाणां स्पष्टीकरणे वैषम्याङ्गीकरणमपि भवतो गुणगणनायै प्रभवति । अथ यथा मुनिशास्त्रं तथैव मया स्वीक्रियत इति यदि ब्रूयात् प्रतिब्रूयादेनम् । किमर्थं तर्हि लम्बनदृक्कर्मोद्युक्तमिति । ननु मुनिभिरनुक्तं बीजमपि भवद्भिः स्वीक्रियते तद्वन्मदुक्तलम्बनसंस्करणमधिमासार्थे स्वीक्रियतामिति चेत् । उच्यते । अस्मिन्

काले बीजमेतावत् तस्मिन् काले चेदमिति नोक्तं तथाऽपि बीजं संस्कार्यं ग्रहेष्वित्युक्तं मुनिभिः ।

"ध्यानग्रहोपदेशाद्वीजं ज्ञात्वा सुदैवज्ञैः ।
तत्संस्कृतग्रहेभ्यः कर्त्तव्यौ निर्णयादेशौ"—इति ॥

अत एव बीजं त्वयाऽपि स्वीकृतम् ।

"मुनिप्रणीते मनुजैर्दृश्यते क्वचिदन्तरम् ।
तदा तदेव संसाध्यं न कार्यं सर्वमन्यथा"—इति ॥

तथा सौरे—

"तत्तद्गतिवशान्नित्यं यथा दृक्तुल्यतां ग्रहाः ।
प्रयान्ति तत् प्रवक्ष्यामि स्फुटीकरणमादरात्"*—इति ॥

अत्र नित्यमिति स्फुटीकरणविशेषणं तेन नित्यं स्फुटीकरणं वक्ष्यामीति । तत्र स्फुटीकरणं द्विविधम् । एकं नित्यमन्यन्नैमित्तिकं च । तत्र नियतनिमित्तोपाधिना तुङ्गव्यवधानादिना क्रियमाणं नित्यमित्युच्यते । अनियतनिमित्तोपाधिना बीजवशेन क्रियमाणं नैमित्तिकम् । बीजाख्योऽपि कश्चन वायुविशेषोऽस्तीति कल्प्यते तत्संस्कारस्य दृष्टत्वात् उच्चपातादिदेवतावत् । स तु स्वच्छन्दगतिश्चन्द्रकक्षाप्रभृतिष्वष्टास्वपि कक्षासु भिन्नभिन्नजवेन कदाचिद्वाति कदाचिदेकस्यामेव कक्षायां वाति द्व्यादिकक्षायां वा कदाचित् कक्षाष्टकेऽपि न वाति । यन्मते मुनीनामतीन्द्रियार्थविज्ञाने शक्तिरस्ति तन्मते बीजजवस्य त्रैविध्यं स्वीकार्यम् । कल्पकाले या वास्तवा ग्रहशीघ्रमन्दोच्चपातानां भगणाख्या गतिस्तस्याः संख्याया एकरूपत्वमेवापेक्षितं वस्तुनि द्वैरूप्यासंभवात् । तस्याः कल्पगतेरनुपातसिद्धा यैकदिनजा गतिः साऽप्येकरूपैव । मुनिभिः कस्मिँश्चित् कालविशेषे योपलब्धा मध्यमा गतिः सा वास्तवगतेर्न्यूनाधिका दृष्टा । कल्पादितो वास्तवगत्या साधितग्रहेषु कल्पादित एव वास्तवोपलब्धगत्यन्तरानुपात-

* सूर्यसिद्धान्ते स्पष्टाधिकारे १४ श्लो० ।

सिद्धान्तरसंस्कारेण दृक्समत्वं बहुकालं दृष्टमिति प्रत्यक्षोपलब्धमध्यगत्यैव नूतनाः कल्पभगणाः शिष्याणां क्लेशो माभूदिति कल्पिताः । एवं बीजजवशेनैव भगणानां भेदो जातः । इयं बीजगतिर्नियतोपाधावेवान्तर्गता ।

अत एव

"युगे युगे महर्षीणां स्वयमेव विवस्वता" * ॥

इति सूर्यसिद्धान्ते उक्तम् । किञ्च यन्मतेऽतीन्द्रियार्थविज्ञानं श्रुतित एव भवति तत्र तु ग्रहपातोच्चभगणानां संख्यानानात्वं वेदमूलकमिति वेदितव्यम् । श्रुतावपि कथमनेकधा पाठ इति तत्रापीदमेवोत्तरं तत्तत्कालविशेषावच्छिन्नमध्यमगतिभिन्नत्वाभिप्रायेण वेदे नोक्तम् । किमिति वास्तवा एकविधा एव भगणा नोक्ताः कथमेवंविधा उक्ता इति वेदं कः पर्यनुयुञ्ज्यात् । तस्मादियं बीजगतिर्नियतोपाधावन्तर्गतेत्ययमेको भेदः । अत एव स्मर्यते यस्मिन् काले येन पक्षेण दृग्गणितैक्यं दृश्यते तस्मिन् काले स एव पक्षोऽङ्गीकार्य इति विषयव्यवस्था । अयं बीजगतिभेदो मनुष्यैः पार्थक्येन विवेक्तुं न पार्यते । कल्पादिकालादन्यस्माद्वा कालादुपचयापचयात्मकः कतिपयकाले नियतगतिर्द्वितीयो भेदः । यथा चाचार्यो वक्ष्यति "खाभ्रखार्कैर्हृताः कल्पयाताः समाः"—इति । अयं पारम्पर्योपदेशात् मनुष्यैरपि ज्ञातुं शक्यते । संप्रति नवकलोनश्चन्द्रो दृक्सम इति तृतीयो भेदः । यथा च गणेशदैवज्ञैरुक्तम्–"अङ्कलिकोनाब्ज"†—इति । अयं च मनुष्यलक्ष्यः । "ध्यानग्रहोपदेशात्"इति पूर्वं यदुक्तं तदनयोर्भेदयोर्विषयः । वेधस्य चित्तैकाग्र्येण यन्त्रद्वारा ग्रहज्ञानं ध्यानग्रहशब्देनोच्यते । तस्मात् पारम्पर्योपदेशाच्चेत्यर्थः । तस्मादयं बीजाख्यवायुविशेषः समस्तैर्व्यस्तैर्वा गतिभेदैर्ग्रहमुच्चं पातं वा नक्षत्रं बहून् सर्वान् वा चालयति । नक्षत्रध्रुवकस्यापि दृक्समत्वमिष्टम् ।

---

* सूर्यसिद्धान्ते मध्यमाधिकारे ८ श्लो॰ ।

† ग्रहलाघवे मध्यमाधिकारे १६ श्लो॰ ।

"गोलं बध्वा परीक्षेत विक्षेपं ध्रुवकं स्फुटम्" * ।

इति सूर्यसिद्धान्तोक्तेः । तस्माद्बीजसंस्करणमार्षशास्त्रमूलं लम्बनसंस्करणमधिमासनिर्णयार्थं दर्शान्ते न कार्यमार्षशास्त्रविरुद्धत्वादयुक्तत्वादद्य यावत्प्रामाणिकैरकृतत्वाच्चेत्यलमनया प्रसङ्गागततन्त्रान्तरदूषणकथाप्रस्तावनया ।

श्रीमत्कौङ्कणवासिकेशवसुतप्राप्तावबोधाद्बुधाद्-
भट्टाचार्यसुताद्दिवाकर इति ख्याताज्जनिं प्राप्तवान् ।
यः कृष्णस्तनयेन तस्य रचिते सद्वासनावार्त्तिके
सत्सिद्धान्तशिरोमणेः सुविषमो मध्यमाधिकारो गतः ॥

इति गणिताचार्यनृसिंहकृतौ मध्यमाधिकारः ।

---

**मरीचिः**—अथाहर्गणोत्पन्नग्रहाणां लङ्काभूगर्भमध्यार्कोदयासन्नकालीनानां स्वनिरक्षदेशभूगर्भमध्यार्कोदयासन्नकालीनकरणार्थं देशान्तरफलं विवक्षुस्तत्र तदानयनोपजीव्यं भूपरिधिं सविशेषं शार्दूलविक्रीडितेनाह प्रोक्त इति । भूगोलवृत्तपरिधिस्त्रयस्त्रिंशदूनपञ्चसहस्रयोजनमितः ४९६७ प्रोक्तः प्राचीनैर्मुनिभिर्न मयैव तु । ननु सिद्धान्तशेखरे ।

"योजनैः खखखबाणसंमितैर्भूमिगोलपरिधिः प्रकीर्त्तितः" ।

इत्यनेन ब्रह्मगुप्तादिभिश्च पञ्चसहस्रमितः संपूर्ण उक्तस्तत्कथमित्यतस्तदुत्तरं व्यासकथनव्याजेनाह तदित्यादि । तस्य भूगोलस्य वृत्तपरिधेर्व्यासो मध्यविस्तार एकोनविंशत्यूनषोडशशतयोजनमितः ।

तथा च सिद्धान्तशेखरे ।

"तस्य योजनमया च विस्तृतिर्भूभुजङ्गविषयामृतांशवः" ॥

इत्यनेन व्यासाद्विप्रतिपत्त्याऽतुल्या † ।

---

* सूर्यसिद्धान्ते नक्षत्रग्रहयुत्यधिकारे १२ श्लो० ।

† विशेषवरणः—विस्तृतिर्व्यास इति सिद्धान्तशेखरस्थमूर्ध्वंशाध्यमवलोक्यम् ।

"व्यासे भनन्दाग्निहते विभक्ते खबाणसूर्यैः परिधिस्तु सूक्ष्मः" ।

इति प्राटीस्थप्रकारेण तदुक्तपरिध्यानयनप्रकारादतिसूक्ष्मेण यः परिधिः स एवेति निर्विवादः । एतदानयनस्य सूक्ष्मत्वं गणेशदैवज्ञैर्लीलावतीटीकायां दर्शितम् । एवं च ।

"भूनागतिथयः कर्णो भुवः खखरसाहतः ।
शशाङ्कनवचन्द्राप्तो भूवृत्त … … …" ॥

इत्यादिलघुवशिष्टसिद्धान्तेऽङ्गीकाराच्च मदुक्त एव प्रमाणमत एव प्रोक्त इत्युक्तमिति भावः । योजनमानं तु पाटीपरिभाषोक्तमेव । ननु भुव एकत्वात् ।

"योजनानि शतान्यष्टौ भूकर्णो द्विगुणानि तु ।
तद्वर्गतो * दशगुणात् पदं भूपरिधिर्भवेत्" ।

इति सूर्यसिद्धान्ते ।

"तयैवाङ्गुलमानेन क्षितिपरिधिर्भवति योजनैर्मध्यः ।
चेतरवैः ६६२५ पूर्वापर उत्तरयाम्योऽथ वा तावान्" ॥

इतित्यार्यभटः ।

"खखामरा योजनवेष्टनं भुवो नभःशराभक्षितयोऽस्य विस्तृतिः" ।

इति धीवृद्धिदे कथं परस्परं भूमाने भेद इत्यतो योजनं प्रतिजानीते अयेति । अत इत्यर्थः । भूमानाभेदार्थमिति यावत् । योजनमेकजातीययोजनप्रमाणेनान्यमतयोजनप्रमाणं प्रोच्यते । अभेदकर्त्तृत्वप्रकर्षद्वारा मयोच्यते नान्यैरुक्तमिति भावः । तदेवाह याम्योदगिति । भूवेष्टनं भूगोलवृत्तपरिधियोजनमानं प्रागुक्तम् । दक्षिणोत्तरेण वर्त्तमानयोः पुरयोः पलान्तरेण त्रिप्रश्नाधिकारोक्तप्रकारेण ज्ञातयोस्तद्देशीयाक्षांशयोर्यदन्तरं तेनेत्यर्थः । गुणितम् । द्वादशराश्यंशैः षष्ठ्यधिकशतत्रयेण भक्तम् । तद्भक्तस्य फलभक्तस्य । पुरान्तराध्वनोऽक्षांशान्तरेणोक्तदिशा स्वस्वभूपरिध्याश्रयेण

* विशेषशरणः—अत्राकारच्छेदेन 'अदशगुणात्' किञ्चिन्न्यूनदशगुणादिति पूज्यचरणाः । एतदर्थं द्रष्टव्यः सुधावर्षिणीटीकोपेतः सूर्यसिद्धान्ते मध्यमाधिकारे ५६ श्लोः ।

तयोरेव पुरयोरन्तराध्वनः केवलदक्षिणोत्तरमात्रेणान्तरयोजनमानस्य फलेन तुल्यं योजनम् । एकयोजनमानमिह चतुःक्रोशात्मकपाट्युक्तयोजनमितं भूप्रदेशे ज्ञेयम् । तथा च मदुक्तयोजनमानात् तत्तदुक्तयोजनमानस्य न्यूनाधिकत्वाद्विसदृशं भूमानं भवत्यपि स्वयोजनेन तत्तन्मतेन योजनमानस्य स्पष्टरूपस्यासंपूर्णैकस्य एकयोजनत्वाङ्गीकारेण सर्वसंमतं मदुक्तं भूपरिधिमानमित्यभेदः सुबोधः । अत एवार्यभटे पञ्चत्रोदराङ्गुलमानेन क्रोशादिगणने भूमानाधिक्यं स्पष्टमिति नोक्तदोष इति भावः । एतेन तत्तद्देशे स्वसंकेतितमहल्लघुयोजनप्रमाणेन देशान्तरयोजनप्रमाणयोरभेदोऽपि सूचितः ।

अत्रोपपत्तिः । कश्चिद्गणितशास्त्रज्ञः कुतश्चिन्नगरात् पृथ्वीमानज्ञानार्थं सूर्यबिम्बकेन्द्रोदयकाले पूर्वां दिशं गन्तुं प्रवृत्तः । स यावद्योजनदशकं गतः सन् वालुकायन्त्रेणाहोरात्रषष्टिघटिकापरिपूर्णेन कालं गणयतिस्म तावत् तत्र सूर्योदयदर्शनकाले पूर्वसूर्योदयात् किञ्चिन्न्यूनषष्टिघटिका वृत्ताः । ततस्तेनेदं ज्ञातम् । यथा यथा यद्देशात् प्राग्गच्छति तथा तथा तद्देशसूर्योदयकालात् पूर्वमेव सूर्योदयं पश्यतीति । पूर्णषष्टिघटिकास्तु यद्देशाच्चलितस्तद्देशसूर्योदयकाले भवन्तीति किञ्चिन्न्यूनषष्टिषट्यूनषष्टिघटिकाः पलात्मका॰ग्राह्याः । संपूर्णभूपरिधिभ्रमणं विना पुनः सूर्योदयासंभवात् सावनषष्टिघटीभिर्भूपरिधियोजनानि भवन्त्यतः पलात्मकैतदन्तरेण दश योजनानि तदा षष्टिघटीपल—३६००मितेन कानीति भूपरिधिः स्पष्टः । ततो लम्बज्ययाऽयं परिधिस्तदा त्रिज्यतुल्यलम्बज्यया क इति निरक्षदेशभूवृत्तपरिधिरुक्त उपपन्नः । पूर्वप्रकारेण निरक्षदेश एव भूपरिधिमानं साध्यमिति न लम्बज्याऽनुपातप्रयासो वेत्येकदेशिनः । परिधेः पाट्युक्तप्रकारेण भूव्यास उक्तप्रमाणः सिद्धः । याम्योत्तरवृत्तेऽक्षांशानां सत्त्वादक्षांशान्तरं याम्योत्तरान्तरिततत्तद्देशयोर्याम्योत्तरवृत्ताकाशेऽन्तरांशा वृत्तांशभागेन परिधियोजनानां भूमौ सत्त्वात् । द्वादशराशिभागै-३६०-र्भूपरिधियोजनानि तदाऽक्षांशान्तरैः कानीत्यनुपातेन तदक्षां-

शीयदेशयोरन्तरयोजनानि स्वस्वभूपरिधिमानेन भवन्ति । एतानि केवलदक्षिणोत्तरान्तरेण भवन्तीति । पूर्वापरदक्षिणोत्तरान्तरस्थितयोरन्तरं कर्णरूपमक्षांशान्तरेण न भवतीति याम्योदक्पुरयोरिति पूर्वापरान्तराभावदेशयोर्ग्रहार्थमुपपन्नम् । अत एवाक्षांशतुल्यदेशयोरन्तरं दक्षिणोत्तरं शून्यमुक्तप्रकारेणोपलभ्यते । अन्यथा समाक्षांशदेशयोरन्तरस्य प्रत्यक्षत्वेनोक्तप्रकारस्य व्यभिचारापत्तेः । स्वाभिमतान्तरयोजनप्रमाणेन मानं भवति । अतः पुरान्तराध्वन इत्यनेन पराभिमततद्देशान्तरयोजनमानसंख्यायां संकेतात् सम्यगुक्तमभेदकर्तृयोजनमानम् । यद्यपीदं स्वभूपरिधिना परोक्तपरिधियोजनानि तदैकस्वयोजनेन कानीत्यनुपातेन लाघवात् सिद्ध्यति तथाऽपि लौकिके तद्देशविशेषेण महल्लघुयोजनमानस्य भिन्नत्वेन व्यवहारात् । तदभिप्रायेणाप्येकवाक्यतासंग्रहार्थमनया रीत्या प्रामाणिकगौरवस्यानुसरणं युक्तमेव । ननु तथाऽप्युक्तरीत्या पराभिमतभूपरिधिरपि युक्तः । तन्मतैकयोजने स्वाभिमतयोजनप्रमाणेन योजनमानस्य स्वतः सिद्धत्वात् । तथा च मुख्यः परिधिर्गणितार्थक उपयुक्त इति चेन्न ।

'वेश्मान्तः पतितेषु भास्करकरे चालोक्यते यद्रजः
स प्रोक्तः परमाणुरष्टगुणितैस्तैरेव रेणुर्भवेत् ।
तैर्बालाग्रमथाष्टभिः कचमुखैर्लिक्षा च यूकाष्टभिः
स्यात् ताभिश्च तदष्टकेन च यवोऽष्टाभिश्च तैरङ्गुलम् ॥
तैः स्याद्द्वादशभिर्वितस्तिरुदितो हस्तश्च ताभ्यां पुन-
श्चापं हस्तचतुष्टयेन धनुषां क्रोशः सहस्रद्वयम् ।
एवं क्रोशचतुष्टयेन गदितं सांवत्सरैर्योजनं
कक्षा तद्ग्रहधिष्ण्यभूपरिधिना व्यासादिसंसिद्धये" ॥

इत्यादिप्रसिद्धपरिभाषायाः सर्वाभ्युपगमात् गोलाध्याये प्रत्यक्षप्रमाणेन गृहीत इति स्फुटमाचार्योक्तेश्चास्यैवोपयोगादिति संक्षेपः ॥ १ ॥

इदानीं भूपरिधिस्फुटीकरणं मध्यरेखां चाह ।

**लम्बज्यागुणितो भवेत् कुपरिधिः स्पष्टस्त्रिभज्याहृतो**

यद्वा द्वादशसंगुणः स विषुवत्कर्णेन भक्तः स्फुटः ।
यल्लङ्कोज्जयिनीपुरोपरि कुरुक्षेत्रादिदेशान् स्पृशत्
सूत्रं मेरुगतं बुधैर्निगदिता सा मध्यरेखा भुवः ॥ २ ॥

वा. भा.—अत्रोपपत्तिर्गोले ।

मरीचि—अथ भूपरिधेः स्पष्टत्वं देशान्तरफलसाधनहेतुभूतां मध्यरेखां च शार्दूलविक्रीडितेनाह लम्बज्यागुणित इति । प्रागुक्तो भूपरिधिः । अक्षांशोननवत्यंशानां वक्ष्यमाणप्रकारेण साधितज्यया गुणित इत्यर्थः । त्रिराशिज्यया परमज्यासंख्यया भक्तः स्पष्टो देशान्तरफलसाधनप्रयोजकः स्यात् । लम्बांशज्यासाधने श्रमाधिक्येन गौरवाल्लघुभूतं तत्साधनप्रकारान्तरमाह यद्वेति । सः पूर्वोक्तपरिधिर्विषुवत्कर्णेन विषुवद्दिनीयमध्याह्नच्छायायाः कर्णेन वक्ष्यमाणप्रकारज्ञातपलभावर्गयुतवेन्द्रेन्द्र—१४४ मूलेनेत्यर्थः । फलं स्फुटः प्रागानीत एव भवति । यत् लङ्कात उज्जयिनीपुरोपरिस्थितं कुरुक्षेत्रादिदेशान् स्पृशत् तत्तद्देशसंलग्नं मेरुगतं मेरुपर्वतमवधीकृत्य विद्यमानं सूत्रम् । लङ्कामेर्वोः पूर्वापरान्तराभावेन विद्यमानं समसूत्रम् । बुधैः सूर्यादिभिः ।

"राक्षसालयदेवौकःशैलयोर्मध्यसूत्रगाः" * ।

इति वचनेन भुवो लङ्कामेर्वन्तरावच्छिन्नभूगोलचतुर्थांशस्य सा सूत्रोपलक्षिता रेखा मध्यरेखा तच्छकलद्वयस्य सन्धिरित्यर्थः । निगदिता । तथा च लङ्कातो मेरुपर्यन्तं ये भूमिप्रदेशाः पूर्वापरान्तराभावेन सन्ति ते मध्यरेखादेशा देशान्तरफलोपयुक्ता इति पर्यवसन्नम् ।

तथा च श्रीपतिः ।

"लङ्का कुमारी नगरी च काञ्ची पानाटमद्रिश्च सितः षडास्यः ।
श्रीवत्सगुल्मं च पुरी ततश्च माहिष्मती चोज्जयिनी प्रसिद्धा ॥
स्यादाश्रमोऽस्मान्नगरं सुरम्यं ततः पुरं पट्टशिवाभिधानम् ।

* सूर्यसिद्धान्ते मध्यमाधिकारे ६२ श्लो. ।

श्रीगर्गराटं च सरोहितार्त्तस्थानेश्वरं शीतगिरिः सुमेरुः ॥
इतीव याम्योत्तरगां धराया रेखामिमां गोलविदो वदन्ति ।
अन्यानि रेखास्थितिभाञ्जि लोकैर्ज्ञेयानि तज्ज्ञैः पुटभेदनानि" इति ॥

अत्रोपपत्तिः । प्रागुक्तः सप्ताङ्गाङ्काब्धिमितः परिधिर्निरक्षदेशे । स्वदेशसम्बन्धी यः परिधिः स देशान्तरफलोपजीव्यत्वात् स्फुटः । ननु भुवः कन्दुकाकारत्वेन सर्वत्र तुल्यपरिधेः संभवाद्भवदभिमतो निरक्षदेशपरिधिः स्वदेशस्य न भवतीत्यपूर्वं त्वन्मुखान्निगतं कथं युक्तमिति चेन्न । कन्दुकाकारत्वेऽप्येकप्रदेशस्य मध्यत्वकल्पनेन तत्स्थपरिधेरुक्तमानमितत्वसम्भवात् । तदितरभूप्रदेशे पूर्ववृत्तानुरोधेन कृतवृत्तस्य भिन्नत्वसम्भवायुक्तमेव । तथा हि लङ्कातो मेरोर्भूपरिधियोजनचतुर्थांशान्तरेण सत्त्वान्मेरुभूगर्भे मध्यं प्रकल्प्य भूव्यासार्धेन यद्वृत्तमुत्पद्यते तन्निरक्षदेशोपरीति तद्देशानामुक्त एव परिधिः । अत एव भूपृष्ठे भूपरिधिचतुर्थांशसूत्रस्य वृत्तकारणत्वं युक्तम् । अनयैव रीत्या स्वदेशमेर्वन्तरयोजनैर्मेरुमध्यं प्रकल्प्य भूपृष्ठे यद्वृत्तमुत्पद्यतेत्त तत्संलग्नभूप्रदेशस्येति स्वपरिधिस्ततो न्यून एवेति । एवं निरक्षदेशाद्वडवासन्नदेशे वडवामध्यकल्पने परिधिर्ज्ञेयः । तत्र निरक्षदेशाद्दक्षिणगोलार्धे वडवामध्ये मनुष्यसंचाराभावात् परिधिर्न कृतः । उत्तरभूगोलार्धे मेरुमध्येऽस्मदादीनां सञ्चारात् स्वपरिधिः साधितस्तदनुरोधेन उक्तरीत्या परमपरिधिः । परिध्यभावस्थाने निरक्षमेरू । तत्र क्रमेण लम्बांशपरत्वाभावत्वे वक्ष्यमाणयुक्त्या स्वतः सिद्धेऽतोऽंशानुपातस्य वक्ष्यमाणयुक्त्याऽयुक्तत्वात् । त्रिज्यातुल्यलम्बज्ययोक्तः परिधिस्तदा स्वदेशलम्बज्यया क इत्यनुपातेनोपपन्नं लम्बज्येत्यादिप्रथमसाधनम् । द्वितीयोपपत्तिस्तु वक्ष्यमाणरीत्याऽक्षकर्णे द्वादशशङ्कुः कोटिस्तदा त्रिज्याकर्णे का कोटिरित्यनुपातसिद्धलम्बज्यास्वरूपेण पूर्वोक्तप्रकारे क्रियमाणे त्रिज्यातुल्यगुणहरयोर्नाशाद्द्वादशगुणोऽक्षकर्णभक्त इति सिद्धम् । निरक्षे द्वादशमिताक्षकर्णे यदुक्तः परिधिस्तदेष्टदेशे तदधिकाक्षकर्णे क इति त्रैराशिकादुक्त-

प्रकारेणानीततदधिकपरिधेरसम्भवात् "इच्छावृद्धौ फले ह्रासः"-इत्युक्तेन व्यस्तत्रैराशिकेन वोपपन्नम्। निरक्षपरिधिना यथा भूगोलस्य दक्षिणोत्तरशकले कृते तथा लङ्कामेरुखड्गसिद्धपुरस्पृग्वृत्तरूपतादृशपरिधिना भूगोलस्य पूर्वपश्चिमशकले स्तः। अयं याम्योत्तरवृत्ते परिधिर्भूगोलस्य मध्ये रेखारूपः सिद्धोऽपि लङ्कामेर्वन्तरावच्छिन्नभूप्रदेशे मनुष्यसञ्चारात् परिधिचतुर्थांशरूपैव मध्यरेखोक्ता। अत एव निगदितेत्यनेनागम एवात्र प्रमाणमित्यपि सूचितम् ॥ २ ॥

इदानीं देशान्तरमाह।

यत्र रेखापुरे स्वाक्षतुल्यः पल-
स्तन्निजस्थानमध्यस्थितैर्योजनैः।
खेटभुक्तिर्हता स्पष्टभूवेष्टने-
नोद्धृता प्राग्वणं स्वं तु पश्चाद्ग्रहे ॥ ३ ॥

**वा. भा.**–अत्रोपपत्तिस्त्रैराशिकेन गोलेऽभिहिता च ॥ ३ ॥

**मरीचिः**–अथ यदर्थमयमुद्योगस्तदेव स्रग्विण्याऽऽह यत्रेति। लङ्कातो मेरुपर्यन्तगतरेखयाऽवच्छिन्नं च यत् पुरं भूप्रदेशस्तत्र जात्यभिप्रायेणैकवचनम्। तेन रेखीयभूप्रदेशेष्वित्यर्थः। यत्र यस्मिन् भूप्रदेशे विद्यमानः पलो विषुवद्दिनमध्याह्ने खस्वस्तिकात्-सूर्यस्य याम्योत्तरवृत्ते यैरंशैर्नतिस्तन्मानरूपः स्वाक्षतुल्यः स्वदेशीयाक्षांशतुल्यो भवति। तत् तादृग्रेखाभूप्रदेशो निजस्थानतत्पूर्वापरविभागस्थिततादृशस्वेष्टभूप्रदेशः। तयोर्मध्येऽन्तरे स्थितैर्विद्यमानैर्योजनैरुक्तमानगणितज्ञातयोजनसंख्याभिर्ग्रहगतिः प्रागुक्ता गुणिता साधितस्पष्टभूपरिधियोजनमानेन भक्ता। फलं यदाद्या गतिस्तदादिकं देशान्तराख्यं ग्रहेऽहर्गणानीते प्रागुक्ते। प्राक् रेखातः पूर्वविभागे देशे हीनं पश्चिमविभागे युतं कार्यम्।

अत्रोपपत्तिः। अहर्गणोत्पन्नग्रहाणां लङ्कामध्यमार्कोदयकालासन्नकालिकानां स्वनिरक्षभूगर्भतात्कालिककरणे यत् फलं तद्देशान्तरं पूर्वा-

परमित्युच्यते । स्वेष्टदेशस्य लङ्कादिनिरक्षदेशेषु यन्निरक्षभूप्रदेशेन लङ्कारेखादेशयोरिव पूर्वापरान्तराभावः स स्वनिरक्षदेशश्च । तत्र तत्फलज्ञानार्थं लङ्कास्वदेशनिरक्षयोरन्तरयोजनानि निरक्षदेशपरिधिस्थानि ग्राह्याणि । अस्मादृशां तत्र संचाराभावादेषां ज्ञानार्थं लङ्कातः पूर्वापरान्तराभावावच्छिन्नस्वस्पष्टपरिधिसंलग्नरेखाभूप्रदेशात् स्वदेशपर्यन्तं स्पष्टपरिधिस्थान्यन्तरयोजनानि ज्ञातव्यानि । तत्रैतादृशरेखाभूप्रदेशज्ञानं स्वतांशसमत्वेन विषुवद्दिनमध्याह्ने सूर्यस्य स्वमध्याह्नयाम्योत्तरवृत्ते तुल्यांशैस्तद्देशयोर्नतत्वात् । लङ्कातद्रेखाप्रदेशान्तरयोजनानामेव स्वनिरक्षस्वदेशयोरन्तरत्वान्निरक्षभूपरिधितुल्यतद्याम्योत्तरभूवृत्तपरिधियोजनैर्भगणांशास्तदाऽन्तरयोजनैः केऽंशा इत्यनुपातेनागताक्षांशतुल्यत्वाच्च । अन्यथा स्पष्टपरिधिस्थत्वं रेखास्वदेशयोर्न स्यात् । अत एवाक्षांशतुल्यमात्रोक्तेनातिप्रसङ्गभयाद्रेखापुरमित्युक्तम् । सिद्धान्तशेखरे तु पञ्चसहस्रमितभूपरिध्यङ्गीकारेण ।

"तिर्यक्स्थितं स्वपुटभेदनतोऽध्वमित्या
रेखास्वपत्तनमवेत्य जनप्रसिद्ध्या ।
स्वस्थानतत्फलवियोगलवाः शराङ्कैः
क्षुण्णा हृता नवभिराप्रकृतिर्विशोध्या ॥
विज्ञातयोजनकृतेः पदमात्मधाम-
रेखान्तरालतनुयोजनकर्णमाहुः" ॥

इत्यनेन देशान्तरयोजनज्ञानं युक्तियुक्तमुक्तम् । अथैभ्यः स्पष्टपरिधिप्रमाणेनैतानि तद्रेखादेशस्वदेशान्तरयोजनानि तदा निरक्षदेशपरिधिप्रमाणेन कानीत्यनुपातेन लङ्कास्वनिरक्षदेशान्तरयोजनानि भवन्ति । ततो निरक्षभूवृत्तपरिधिभ्रमणेनोदयसंभवादेकसावनदिनीयतद्योजनैर्गतिकलास्तदा लङ्कास्वनिरक्षदेशान्तरपूर्वसिद्धयोजनैः का इत्यनुपातेन निरक्षदेशपरिधेस्तुल्यगुणहरत्वेन नाशात् तादृग्रेखादेशस्वदेशान्तरयोजनसंख्यागुणिता गतिः स्पष्टभूपरिधिमानभक्तेति सिद्धम् । अथेदं

लङ्कादेशात् स्वनिरक्षदेशस्य पूर्वभागे स्थितत्वेन पश्चिमाभिमुखप्रवहानिलसंचलितसूर्यस्योदयो लङ्कोदयात् पूर्वकाल इति तत्कालीनकरणार्थं फलं ग्रहे हीनम् । एवं पश्चिमविभागेऽग्रिमकाल इति युतम् । अहर्गणोत्पन्नग्रहाणां तदुदयासन्नकालिकत्वात् स्वनिरक्षदेशोदयासन्नकाल एव सिद्ध्यन्ति । यथा मद्रूपरेखादेशात् स्वदेशस्य पूर्वपश्चिमविभागयोः स्थितत्वं तथा स्वनिरक्षदेशस्य लङ्कात इति सर्वमुपपन्नम् ॥ ३ ॥

इदानीं देशान्तरघटिका आह ।

प्राग्भूविभागे गणितोत्थकाला-
दनन्तरं प्रग्रहणं विधोः स्यात् ।
आदौ हि पश्चाद्विवरे तयोर्या
भवन्ति देशान्तरनाडिकास्ताः ॥ ४ ॥
तद्घ्नं स्फुटं षष्टिहृतं कुवृत्तं
भवन्ति देशान्तरयोजनानि ।
घटीगुणा षष्टिहृता द्युभुक्तिः
स्वर्णं ग्रहे चोक्तवदेव कार्यम् ॥ ५ ॥
अर्कोदयादूर्ध्वमधश्च ताभिः
प्राच्यां प्रतीच्यां दिनपप्रवृत्तिः ।
ऊर्ध्वं तथाऽधश्चरनाडिकाभी
रवावुदग्दक्षिणगोलयाते ॥ ६ ॥

वा.भा.—यः किल मध्यरेखाया अपरिज्ञानात् ततः प्राक् पश्चाद्वा स्थितोऽस्मीति न वेत्ति तेनैवं ज्ञातव्यम् । विधुग्रहणदिने घटिकायन्त्रेण स्पर्शकाले रात्रिगतं ज्ञेयम् । अथ च गणितेन स्पर्शकालो ज्ञेयः । गणितोत्थकालादनन्तरं प्रग्रहणं यदि दृष्टं तदा द्रष्टा रेखातः प्राग्भूविभागे । यतो द्रष्टा यथा यथा रेखातः प्राग्व्रजति तथा तथा रेखोदयात् प्रागेवार्कोदयं

पश्यति । इतोऽन्यथा चेत् तदा पश्चाद् दृष्टा । दृग्ग्रहणग्रहणकालयो- रन्तरं देशान्तरघटिकास्ताभिर्गुणितं षष्ट्या हृतं स्पष्टभूवेष्टनम् । एवमनुपा- ताद्देशान्तरयोजनानि । अथ वा किं योजनैः । यदि घटीषष्ट्या गतिर्लभ्यते तदा देशान्तरघटीभिः किमित्येवं यत् फलमुत्पद्यते तत् प्राग्धनं पश्चादृनमिति युक्तमुक्तम् । तथा प्राच्यां ताभिर्घटीभिर्दिनवारप्रवृत्ति- र्कोदयादूर्ध्वं भवति । प्रतीच्यां तु तस्मादधः । यतो लङ्कोदये वारादिः । अत एव च रवावुत्तरगोलस्थे चरार्धघटिकाभिरूर्ध्वम् । यतस्तदोन्मण्डलं क्षितिजादूर्ध्वम् । दक्षिणे त्वधोऽतस्तत्रोदयादधो वारप्रवृत्तिरिति सर्वं निरवद्यम् ॥ ४ ॥

**मरीचिः**–ननूच्चावचभूमौ तादृशयोजनानां सूक्ष्मत्वेन ज्ञानासंभवादस्मा- दृशां देशान्तरगणनाया अशक्यत्वाच्च कथं तदुपजीव्यफलज्ञानं तत्संस्का- रार्थं च रेखापूर्वापरयोः स्वदेशे स्पष्टत्वं च कथं ज्ञेयमत उपजातिकाभ्यामाह प्राग्भूविभाग इति । गणितोत्थकालात् देशान्तरयोजनफलसंस्कारं विना वक्ष्यमाणप्रक्रियानीतस्पर्शमध्यमोक्षकालीनभूपृष्ठरात्रिगतघटिकामितेश्चन्द्र- स्य ग्रहणं स्पर्शमध्यमोक्षरूपं यथायोग्यमुत्तरकाले स्यात् । दृष्टं चेत् स्यात् तदा स्वदेशो रेखातः पूर्वभूमिप्रदेशेऽस्तीति ज्ञेयम् । इत्यसंश- यम् । आदौ पूर्वकाले चेद्दृष्टं तदा स्वदेशः पश्चिमप्रदेशे । ननु रेखा- पूर्वापरयोरवस्थितिज्ञानेऽपि योजनज्ञानाभावात् तत्फलज्ञानं न स्यादत आह विवर इति । तयोर्गणितागतभूपृष्ठरात्रिस्पर्शादिघटिकास्वसूर्या- स्तगणितप्रत्यक्षस्पर्शादिघटिकयोरित्यर्थः । अन्तरे मध्ये या यत्संख्याकाः । ता घट्यो देशान्तरघटिकाः प्रत्येकं समा भवन्ति । ननु तथाऽप्युपजीव्या- ज्ञानमत आह तद्घ्नमिति । कुवृत्तं भूपरिधियोजनमानं पूर्वानीतं स्पष्टम् । तद्घ्नं देशान्तरघटीभिर्गुणितं षष्टिभक्तं फलं स्वरेखास्वदेशयोर्मध्यस्थानि योजनानि भवन्ति । अथ लाघवाद् देशान्तरफलस्य तद्व्यतिरेकेणैव सिद्धत्वाद्योजनैरपि किं प्रयोजनमित्याह घटीत्यादि स्पष्टम् । ननु योऽ-

नानीतफलस्य ग्रहे उक्तरीत्या संस्कारस्योचितत्वाद्देशान्तरघटीसाधितफलं कथं ग्रहे संस्कार्यम् । प्रकारभेदेन भिन्नत्वादत आह स्वर्णमित्यादि । चोऽप्यर्थे । उक्तवद्योजनानीतफलसंस्काररीत्या । एवकारस्तदन्यरीतिव्यवच्छेदार्थः । उभयप्रकारेण फलमानस्य तुल्यत्वादभेद इति भावः ।

अत्रोपपत्तिः । देशान्तरसंस्कारं विना चरसंस्कारेण ग्रहस्य वक्ष्यमाणयुक्त्या स्वरेखादेशे सिद्धत्वेन तत्साधितस्पर्शादिघटिका रेखादेशे भवन्ति । प्रत्यक्षस्पर्शादिकाले स्वार्कास्तकालाद्घट्यादियन्त्रेण ज्ञातघटिकाः स्वदेशे प्रत्यक्षसिद्धाः । चन्द्रस्पर्शादिग्रहणस्य सर्वदेशे एककालीनत्वाद्रेखातः पूर्वदेशे प्रथममुदयास्तयोः प्रतिपादनात् । स्पर्शादिकाले गणितस्वरेखादेशघटिकाभ्यः स्वदेशघटिका अधिका एव भवन्ति । एवं पश्चिमदेशे तदुत्तरकाले उदयास्तयोः सिद्धत्वेन गणितागतस्वरेखाघटीभ्यो न्यूनाः स्वदेशघटिका भवन्ति । तद्घट्योरन्तरं प्रत्येकं तदुदयास्तयोरन्तरघटिका इति देशान्तरघटिकाः सिद्धाः । सूर्यस्पर्शादिरूपग्रहणस्य सर्वदेशे एककालीनत्वाभावादनियमात्त्र विधोरिति सूर्योदयद्वयान्तररूपसावनषष्टिघटीभिः स्पष्टभूपरिधियोजनानि तदा देशान्तरघटीभिः कानीत्यनुपातेन रेखास्वदेशयोरन्तरयोजनानि । एतद्रीत्येव षष्टिघटीभिरेकदिनीयगतिभोगस्तदा देशान्तरघटीभिः क इत्यनुपातेन योजनानुपजीव्येन देशान्तरफलानयनं युक्तम् । अस्य पूर्वानीतफलरूपत्वादभेदेनोक्तवत् संस्कारः । अतः प्राग्भूविभाग इत्यादिश्लोकद्वयमुपपन्नम् ॥ ४-५ ॥

**मरीचिः**—ननु देशान्तरफलसंस्कारेण ग्रहाणां स्वनिरक्षोदयासन्नकालीनानां संभवात् तत्कालान्तरघटिका देशान्तरघटिका भवन्तु युक्ताः परन्तु तयोर्या भवन्ति देशान्तरनाडिकास्ता इत्यनेन कथं युक्ता इत्युपपत्तिज्ञानहीनानां शङ्कापरिहारमुपजातिकया वारप्रवृत्तिनिरूपणव्याजेनाह अर्कोदयादिति । ताभिर्विवरे तयोर्या भवन्तीत्यनेन ज्ञातघटिकाभिः । अर्कोदयात् सूर्यमण्डलकेन्द्रस्वक्षितिजप्राक्प्रदेशसंयोगकालादूर्ध्वमग्रि-

मकालेऽधः पूर्वकाले । क्रमेण प्राच्यां प्रतीच्यां रेखादेशात् पूर्वपश्चिमविभागस्थितदेशयोर्दिनपप्रवृत्तिर्वारस्यादिर्भवति न तु दिनारम्भरूपस्वसूर्योदये । विशेषान्तरमाह ऊर्ध्वमिति । तथा यथा प्राक्पश्चिमयोर्देशान्तरघटीभिः स्वसूर्योदयाद्वारप्रवृत्तिस्तथेत्यर्थः । उदग्दक्षिणगोलयाते "*स सौम्यगोलो भदलं यदाद्यं याम्योऽपरम्"-इति वक्ष्यमाणमेषादिषड्भतुलादिषड्भरूपोत्तरदक्षिणगोलयोर्याते गते प्राप्ते रवौ सायनादेव गोलप्रवृत्तेः सायनसूर्ये उत्तरदक्षिणगोलयोरित्यर्थः । चरनाडिकाभिर्वक्ष्यमाणचरघटीभिः क्रमेण । स्वसूर्योदयादूर्ध्वमधश्च वारप्रवृत्तिः । तथा च स्वदेशे पूर्वस्थे देशान्तरघटीभिरूर्ध्वं वारप्रवृत्तिरिति सिद्धेऽपि तत्रोत्तरगोले चरघटीभिरप्यूर्ध्वमिति चरदेशान्तरघटीयोगघटीभिरूर्ध्वं वारप्रवृत्तिः स्वसूर्योदयादये वारप्रवृत्तिः सिद्धा । दक्षिणगोले चरघटीभिरध इति तदन्तरेणोर्ध्वाधः शेषवशात् स्वार्कोदयादग्रिमपूर्वकालयोः । एवं स्वदेशे पश्चिमस्थे दक्षिणगोले चरदेशान्तरघटीयोगतुल्येन स्वसूर्योदयात् पूर्वम् । उत्तरगोले तदन्तरेणोर्ध्वाधः शेषवशादग्रिमपूर्वकालयोः स्वसूर्योदयादिति निर्गलितार्थः ।

"लङ्कोदग्याम्यसूत्रात् प्रथममपरतः पूर्वदेशे च पश्चा-
दूर्ध्वस्थाभिर्घटीभिः सवितुरुदयतो वासरेशप्रवृत्तिः ।
ज्ञया सूर्योदयात् प्राक् चरशकलभवैश्चासुभिर्याम्यगोले
पश्चात् तैः सौम्यगोले युतिवियुतिवशाच्चोभयोः स्पष्टकालः" ॥
इति सिद्धान्तशेखरोक्तेश्च ।

-एवं च निरक्षदेशे चराभावात् पूर्वोर्धनैव वारप्रवृत्तिज्ञानाद्देशान्तरघटीनां वक्ष्यमाणयुक्त्या स्वनिरक्षलङ्कादेशयोः सूर्योदयकालान्तरत्वप्रतिपादनात् तद्ग्रहाधिकरणकालान्तरत्वमर्थसिद्धमिति देशान्तरघटीनां तद्रूपत्वमेवेति न क्षतिरिति भावः ।

* ग्रहगणिते त्रिप्रश्नाधिकारे ३१ श्लो० ।

अत्रोपपत्तिः । सृष्ट्यादौ लङ्कासूर्योदयादेव सर्वत्र प्रथमं वारप्रवृत्तेः "लङ्कानगर्यामुदयाच्च" इत्यनेन प्रतिपादनात् तदनुरोधेन प्रतिदिनमपि सर्वत्र लङ्कासूर्योदयकाले वारप्रवृत्तिः ।

तथा च ब्रह्मगुप्तः ।

"जगति तमोभूतेऽस्मिन् सृष्ट्यादौ भास्करादिभिः सृष्टैः ।
यस्माद्दिनप्रवृत्तिर्दिनवारोऽर्कोदयात् तस्मात्"—इति ॥

इति ।

सिद्धान्तशेखरेऽपि ।

"सृष्टेर्मुखे ध्वान्तमये हि विश्वे ग्रहेषु सृष्टेष्विनपूर्वकेषु ।
दिनप्रवृत्तिस्तदधीश्वरस्य वारस्य तस्मादुदयात् प्रवृत्तिः"·इति ॥

नन्वेवम् ।

"केचिद्वारं सवितुरुदयात् प्राहुरन्ये दिनार्धाद्
भानोरर्धास्तमयसमयादूचिरे के चिदेवम् ।
वारस्यादिं यवननृपतिर्दिङ्मुहूर्त्ते निशायां
लाटाचार्यः कथयति पुनश्चार्धरात्रे स्वतन्त्रे" ॥

इत्युक्तेन वारप्रवृत्तेरनेककालप्रतिपादनाल्लङ्कासूर्योदयकाल एव कथमुक्त इति चेन्न । लङ्कासूर्योदयकालं विना मध्याह्नादिषु वारप्रवृत्तिः । व्यवहारस्य लोकेऽभावादेतद्वचनस्यार्षमूलकत्वाभावेनोपेक्षणीयत्वाल्लङ्कासूर्योदयकाले यद्देशेषु मध्याह्नाद्युक्तकाला भवन्ति तद्देशपरत्वेन तस्योक्तत्वाद्वा । अथ यद्यपि मध्याह्नास्तमनरात्रिदिङ्मुहूर्त्तकालानामार्षमूलकत्वाभावेन भवदभिमतार्थसिद्धिस्तथाऽपि लङ्कार्धरात्रस्य वारप्रवृत्तिरूपस्य समूलत्वाद्विरोधः ।

"वारप्रवृत्तिः प्राग्देशे क्षपार्धेऽभ्यधिके भवेत् ।
तद्देशान्तरनाडीभिः पश्चादूने विनिर्दिशेत्* ॥"

* सूर्यसिद्धान्ते मध्यमाधिकारे ६६ श्लो· ।

"वारप्रवृत्तिर्लङ्कायां मध्यरात्रे भवेत् ततः ।
ऊर्ध्वमर्वाक् प्राक् प्रतीचो तद्देशान्तरसंज्ञकैः" ॥
इति सूर्यरोमशवचनयोः प्रसिद्धत्वात् ।
अत एव—
"सूर्याद्यो वासराधीशो लङ्कायामार्धरात्रिकः ॥
सिद्धपूर्यां तु मध्याह्ने यमकोट्यामिनोदये ।
वारप्रवृत्तिः संध्यायां रोमकायामिति स्थितिः" ॥

इति सोमसिद्धान्तोक्तं युक्तम् । लङ्कार्धरात्रकाले सिद्धपुरयमकोटिरोमकदेशेषु मध्याह्नसूर्योदयास्तकालानां क्रमेण संभवादिति चेन्न । एतन्मते लङ्कार्धरात्रे वारप्रवृत्ते"र्लङ्कायामार्धरात्रिकः सावनो द्युगणः"-इत्यनेनाङ्गीकारादहर्गणस्य शुद्धाशुद्धज्ञानार्थं मध्यरात्रादेव वारप्रवृत्तेरुपलब्धत्वेनाभिधानात् ।

"सप्तभिः क्षयितः शेषः सूर्याद्यो वासरेश्वरः"* ।
इति स्फुटमुक्तेश्च ।
"सावनो द्युगणः सूर्यादित्यं योऽसौ नगैर्हृतः" ।

इति सोमसिद्धान्ताच्च । यथा मूलकारेणाहर्गणानीतग्रहाधिकरणकालो वारप्रवृत्तिकथनेन स्वदेशे उक्तस्तथा सूर्यादिभिरपि स्वाभिमतार्धरात्रिकालः पूर्वापरदेशान्तरपलैरेव साधयित्वा वारप्रवृत्तिसंज्ञ उक्तो न तु वस्तुभूतवारप्रवृत्तिरूपेण । तत्र तदभिज्ञानामपि तथाविधव्यवहाराभावादबहुसंमतत्वाच्च । न च लङ्कासूर्योदयकालोऽप्युक्तरीत्या तथेति वाच्यम् ।

"वारप्रवृत्तिः सर्वेषां लङ्कायां भास्करोदयः" ।
"प्रभाकरस्योद्गमनात् पुरे स्याद्वारप्रवृत्तिर्देशकन्धरस्य" ।

---

* सूर्यसिद्धान्ते मध्यमाधिकारे ५१ श्लो· ।

इति कश्यपवशिष्ठवचनाभ्यां लङ्कासूर्योदयकालस्य वस्तुभूतस्यैव वारप्रवृत्तिरूपत्वात्। न चानयोः सर्वेषां मते लङ्कायां सूर्योदयो लङ्कायां वारप्रवृत्तिकालस्तेन स्वसूर्योदयः स्वदेशे वारप्रवृत्तिकालः। "वारः स्वदेशार्कोदयादितः"—इति लघुवसिष्ठोक्तेरित्यर्थ इति वाच्यम्।

"वारप्रवृत्तिविज्ञानं लग्नवारार्थमेव हि।
अखिलेष्वन्यकार्येषु दिनादिरुदयो भवेत्" ॥

इति वसिष्ठसंहितावचनोक्तविषयव्यवस्थाऽनुपपत्तेः। भास्करोदयो वारप्रवृत्तिरित्यनेन स्वसूर्योदयः स्ववारप्रवृत्तिरित्यर्थलाभाल्लङ्कायामित्यस्य व्यर्थतापत्तेश्च। तस्माल्लङ्कायां यः स काल एव वारप्रवृत्तिः सर्वेषां लोकानां भवतीति तदर्थो युक्तः। अत एव लघुवसिष्ठसिद्धान्ते-

"... ... ... ... ... ... ... द्विजाग्रयः।
लङ्कायां यमकोट्यां च सिद्धपुर्यां च रोमके ॥
अर्धरात्रोदयौ तद्वद्दिनार्धास्तमयौ तथा"।

इति ग्रहोपजीव्यत्वेनाहर्गणसाधनोत्तरं सूर्यसिद्धान्तानुसारेण सोमसिद्धान्तवदुक्त्या "स्वदेशार्कोदयादितः"—इत्यस्याग्रे स्पष्टगत्यध्याये

"देशान्तरचरग्राह्यैः स्वदेशार्कोदयः स्फुटः"।

इति वारप्रवृत्तिरूपं विवरणमुक्तम्। अन्यथा वृद्धवसिष्ठसिद्धान्ते देशान्तरचरसंस्कारपतैः स्वदेशे लङ्कासूर्योदयकालस्य वारप्रवृत्तिरूपस्य साधनं व्यर्थं स्यात्। यत् तु लङ्कास्सूर्योदयादेव चारवारादिप्रवृत्तेस्तत्सूर्योदयकालादेव वारप्रवृत्तिरित्येव युक्तम्। कश्यपवचनस्य सर्वेषां मतेन लङ्कायां यः सूर्योदयः स कालो वारप्रवृत्तिर्देशस्यानुद्दिष्टत्वात् सर्वेषां तदैव वारप्रवृत्तिरित्यर्थाच्च। एवं चोदयकाले वारप्रवृत्तिवाक्यानि लङ्कोदयाभिप्रायिकाणि मध्याह्ने यानि यमकोट्यभिप्रायेणास्ते यानि तानि सिद्धपुराभिप्रायेणार्धरात्रे तानि रोमकाभिप्रायेणोदये। लङ्कोदयकाले हि यमकोटिसिद्धपुररोमकेषु क्रमेण मध्याह्ना-

स्समनार्धरात्राः संभवन्ति । पूर्वापरसूत्रवृत्ते परिधिचतुर्थांशान्तरेण स्थितत्वात् ।

अत एव शाकल्यसंहितायाम् ।

"यमकोटी च लङ्का च रोमकं सिद्धपूर्यपि" ।

इति प्रथममुक्त्वाऽग्रे—

"मध्योदयार्धरात्र्यस्तकाले वारः प्रजायते" ।

इत्युक्तम् । सूर्यसिद्धान्तोक्तस्यापि लङ्कासूर्योदयकाले वारप्रवृत्तिरित्यर्थसिद्धेः ।

तथाहि—"तत् ततः स्वीयार्धरात्रस्य मिश्रसंज्ञस्य"-परामर्शादर्धरात्रादये संबन्धः । चपार्धशब्देन निरक्षदेशीयार्धरात्रमानं पञ्चदशघटिकात्मकम् । तथा च रेखातः पूर्वदेशे देशान्तरघटीभिर्युक्ते पञ्चदशघट्यात्मके पश्चिमदेशे हीने । तस्मात् स्वीयार्धरात्रसंज्ञमिश्रकालादये वारप्रवृत्तिः । एवं च स्वीयार्धरात्रपञ्चदशघटिकायोगो देशान्तरसंस्कृतः कार्य इति सिद्धमतो न विशेषः । एवं सोमसिद्धान्तोक्तस्याप्यर्धरात्रिको रोमकदेशीयार्धरात्रिको लङ्कासूर्योदय इत्यर्थाल्लङ्कायां वारप्रवृत्तिः । सिद्धपुरे यमकोटिमध्याह्ने यमकोट्यां लङ्कासूर्योदये रोमके सिद्धपुर्यस्तकाले । न च रोमकोक्तवचनस्यैतादृशार्थेऽपि चरसंस्कारानुक्तस्वेनासंगतमिति वाच्यं विषुवद्दिनविषयत्वात् । तस्माल्लङ्कासूर्योदयकाले वारप्रवृत्तिरिति निर्विवादमिति । तत्र लङ्कार्धरात्र एव चारवारादिप्रवृत्तिस्तत्रैव वारप्रवृत्तिर्युक्ता । तेन सूर्यसिद्धान्तोक्तयथाश्रुतार्थस्य साधुत्वात् । सोमसिद्धान्तोक्तं यथाश्रुतं युक्तम् । कश्यपवसिष्ठशाकल्यवचनेन लङ्कासूर्योदयबोधकानां यथासंभवमर्थो भवेदुक्तरीत्या ज्ञेयस्तेन लङ्कार्धरात्रकालस्यैव वारप्रवृत्तित्वमिति विपरीतस्यापि सुवचत्वात् । स कालः स्वदेशे साध्यः । तत्र स्वनिरक्षदेशे प्रथमं तज्ज्ञानम् । चन्द्रग्रहणोक्तदिशाऽऽनीतस्वदेशस्वरेखार्कोदयान्तररूपदेशान्तरफलेनाहर्गणोत्पन्नग्रहाणां संस्काराद.

पि स्वनिरक्षदेशे संभवाद्देशान्तरघटीतुल्यमेव लङ्कास्वनिरक्षदेशार्कोदययोरन्तरम्। तत्र लङ्कातः प्राच्यां स्वनिरक्षदेशे लङ्काक्षितिजात् पूर्वभागे स्वक्षितिजमधः पश्चिमभागे उपरि ध्रुवद्वये लङ्कास्वनिरक्षदेशक्षितिजयोस्तुल्यवृत्तयोः संयोगात्। अतः प्राच्यां स्वनिरक्षदेशे तत्सूर्योदयाद्देशान्तरघटीभिरग्रिमकाले लङ्कासूर्योदयः। एवं पश्चिमदेशे लङ्काक्षितिजात् पूर्वभागे स्वनिरक्षक्षितिजमूर्ध्वं पश्चिमभागे त्वध इति स्वनिरक्षदेशसूर्योदयाद्देशान्तरघटीभिः पूर्वकाले लङ्कासूर्योदयः। अथ स्वदेशे स्वनिरक्षदेशक्षितिजादुन्मण्डलाख्यात् स्वक्षितिजमुत्तरगोले त्वधः दक्षिणगोले तूर्ध्वम्। अतस्तदवधीभूतस्वनिरक्षदेशार्कोदय उक्तः। दक्षिणगोलयोः स्वार्कोदयादूर्ध्वमधश्च क्रमेणेत्युपपन्नमर्कोदयादित्यादि यथोक्तम्। तथा च स्वदेशे पूर्वभागे उत्तरगोले स्वसूर्योदयाद्देशान्तरचरयोगघटीभिरूर्ध्वं लङ्कासूर्योदयो दक्षिणगोले तदन्तरघटीभिर्देशान्तरचरशेषवशादूर्ध्वमधः। पश्चिमभागे उत्तरगोलेऽन्तरघटीभिर्देशान्तरचरशेषवशादध ऊर्ध्वं पश्चिमदेशे दक्षिणगोले देशान्तरचरयोगघटीभिः पूर्वकाले लङ्कासूर्योदय इत्युपपन्नम्। अत एव।

"उत्तरदक्षिणचरदलहीनयुता नाडिका रवेरुदयात्।
प्राक्पश्चाद्देशान्तरयोजनखाष्टांशकेनापि"॥

इति सप्तर्षिसंहितायां युक्तमुक्तम्।

एतेन।

"वारप्रवृत्तिं मुनयो वदन्ति सूर्योदयाद्रावणराजधान्याम्।
ऊर्ध्वं तथाऽधोऽप्यपरत्र तस्माच्चरार्धदेशान्तरनाडिकाभिः॥
चरार्धदेशान्तरयोर्वियोगयोगात् समानीय फलैश्च सम्यक्।
सूर्योदयादूर्ध्वमृणे धनेऽधो वारप्रवृत्तिं मुनयो वदन्ति॥"

इति श्रीपत्युक्तं श्लोकद्वयं व्याख्यातम्।

अत एव च

"चरार्धदेशान्तरयुग्वियोगो क्रमेण याम्योत्तरगोलगेऽर्के।

योगे पुरा स्व्युदयाद्वियोगे पश्चात् प्रवृत्तिर्दिनवारकर्त्तुः" ॥

इति विधाहन्दावने केशवार्कोक्तस्यायं मदुक्तोऽर्थः । तथा हि, यत्र चरपुरस्कारेणैव संस्कारदर्शनाद्देशान्तरं रेखातः पूर्वभागे ऋणं पश्चिमभागे धनमिति स्थिरत्वात् स्वतः सिद्धं ग्राह्यम् । वारप्रवृत्त्यर्थं ग्रहसंस्कारवत् तयोः संस्कारस्य युक्तिसिद्धत्वेन प्राच्यामृणं पश्चिमतो धनमित्युक्तत्वात् । ततो याम्योत्तरगोलगेऽर्के क्रमेण चरार्धदेशान्तरयुग्वियोगौ कार्यौ । अर्धस्यांशपरत्वाच्चरमेव न तु चरस्यार्धमर्थः । तेन देशान्तरस्य युग्वियोगौ । चरेण देशान्तरं युतं हीनं गोलक्रमेण कार्यमित्यर्थः । अतो रेखातः पूर्वभागे दक्षिणगोले देशान्तरस्य चरयोगे "धनर्णयोरन्तरमेव योगः"-इति रीत्या देशान्तरचरान्तरमेव निष्पन्नम् । चरदेशान्तरं तु शेषवशादृनमृणम् । पश्चिमभागे देशान्तरस्य धनस्य चरयोगे "योगे युतिः स्यात् क्षययोः स्वयोर्वा"-इति तद्योगो धनम् । उत्तरगोले पूर्वभागे च देशान्तरस्यर्णस्य चरवियोगे ।

"संशोध्यमानं स्वमृणत्वमेति स्वत्वं क्षयस्तद्युतिरुक्तवच्च" ।

इत्युक्तेन चरस्य संशोध्यमानत्वाद्देशान्तरचरयोग ऋणम् । पश्चिमभागे तु देशान्तरस्य धनस्य चरोने क्रियमाणे उक्तरीत्या देशान्तरचरान्तरं देशान्तरचरशेषवशादृनमृणमिति सिद्धम् । ततो वारप्रवृत्तिज्ञानं सुलभमित्याह योग इत्यादि । योगे धनशेषस्यार्कोदयात् पूर्वं वियोगे ऋणसंस्कारे पश्चात् अग्रिमकाले । दिनवारकर्त्तुर्वारस्य प्रवृत्तिरादिर्भवतीत्यर्थः । ननु यथाश्रुतोऽर्थो मुनिभिरनुक्तत्वेन सदाऽमुकदेशार्कोदयो वारप्रवृत्तिकाल इत्याद्यनियमात् ? न च । पश्चिमभागे देशान्तरस्य धनत्वेन दक्षिणगोले तद्योगस्योत्तरगोले तदन्तरस्य युक्तत्वेन रेखातः पश्चिमाभिप्रायेणोक्तमिति यथाश्रुतेऽर्थे न क्षतिरिति वाच्यम् । उत्तरगोले देशान्तराद्वने चरे उक्तरीत्या तदन्तरेण स्वसूर्योदयात् पूर्वं वारप्रवृत्तिरिति युक्तिसिद्धार्थस्य वियोगे पश्चादित्यनेनासिद्धेरित्यलं पल्लवितेन ॥६॥

इदानीं ग्रहाणां बीजकर्माह ।

खाभ्रखार्कैर्हृताः कल्पयाताः समाः
शेषकं भागहारात् पृथक् पातयेत् ।
यत् तयोरल्पकं तद्द्विशत्या भजे-
ल्लिप्तिकाद्यं फलं तत् त्रिभिः सायकैः ॥ ७ ॥
पञ्चभिः पञ्चभूभिः कराभ्यां हतं
भानुचन्द्रेज्यशुक्रेन्दुतुङ्गेष्वृणम् ।
इन्दुना दस्रबाणैः कराभ्यां कृतै-
र्भौमसौम्येन्दुपातार्किषु स्वं क्रमात् ॥ ८ ॥

**वा.भा.**–स्पष्टम् ।

अत्रोपलब्धिरेव वासना । यद्वर्षसहस्रषट्कं यावदुपचयस्ततोऽपचय इत्यत्रागम एव प्रमाणं नान्यत् कारणं वक्तुं शक्यत इत्यर्थः ॥ ७–८ ॥

**मरीचिः**–ननु चन्द्रग्रहणाज्ज्ञातयोजनानि स्वरेखास्वदेशमध्यस्थगणित-योजनेभ्यो विशदानीत्ययुक्तं चन्द्रग्रहणाद्देशान्तरफलज्ञानमतो बीजसंस्कार-कथनव्याजेन सार्द्धवृत्ताभ्यामुत्तरमाह । खाभ्रखार्कैरिति स्पष्टार्थम् । तथा च ग्रहाणामेतत्संस्कारस्यावश्यकत्वात् तदन्तर्गतं चन्द्रग्रहणहेतुभूतसूर्यचन्द्रो-च्चपातानामेतदसंस्कारेण स्वतः सिद्धो योजनविसंवाद इत्येतत्संस्कृतानी-तेभ्य उक्तप्रकारेणानीतयोजनानामन्तर्गणितयोजनतुल्यत्वमेव भवतीति भावः ।

अत्रोपपत्तिः । परम्परागतगुरुसंप्रदायानुमितागम एव । स यथा । अतीन्द्रियदृग्भिर्मुनिभिः कल्पादितः षट्सहस्रवर्षं क्रमेणोपचितमन्तरमेत-द्गणानीतग्रहाणामाकाशस्थग्रहासंवादेन परमं दृष्टम् । एतद्गणितानी-तग्रहाणामाकाशे संवादार्थं सूर्यचन्द्रगुरुशुक्रशीघ्रोच्चचन्द्रोच्चेषु ऋणम् । मङ्गलबुधशनिराहुषु धनमिति च दृष्टम् । तत्र सूर्यस्य नवतिकलाः ९०, चन्द्रस्य पञ्चाशदधिकशतम् १५०, भौमस्य त्रिंशत् ३०, बुधशीघ्रोच्चस्य

षष्टियुतसार्धसहस्रम् १५६०, गुरोः सार्धशतम् १५०, शुक्रशीघ्रोच्चस्य सार्धचतुःशतम् ४५०, शनेर्विंशत्यधिकं शतम् १२०, चन्द्रोच्चस्य षष्टिः ६०, चन्द्रपातस्य षष्टिः ६० । ततः षट्सहस्रवर्षे क्रमेणापचितेनान्तराभावश्च । एवं पुनः पुनरिति द्वादशसहस्रवर्षेषु क्रमेणोपचितमन्तरमपचितान्तराभावश्चेत्युभयं दृष्टम् । अत इष्टकाले कल्पगवर्षाणि अव्यवहितपूर्वान्तराभाववत् तत्कालाद्गतवर्षज्ञानार्थं द्वादशसहस्रतष्टानि । शेषं यदि षट्सहस्रान्न्यूनं तदाऽन्तरोपचयकालत एव फलानयनम् । यदि तधिकं तदाऽन्तरापचयकालादिष्टकालाग्रिमान्तराभावकालयोरन्तःस्थवर्षाणि फलानयनार्थं ग्राह्याणि । अत उक्तं यत् तयोरल्पकमिति । षट्सहस्रवर्षैः परमान्तरं तदाऽल्पवर्षैः किमिति गुणहरौ त्रिशदपवर्त्तितौ हरस्थाने शतद्वयं गुणस्थाने उक्ताङ्का इत्युपपन्नम् । एतस्य युक्त्यसंभवदोषादिकं नाशङ्कनीयं पारम्पर्यागतत्वात् । अत एव सिद्धान्तशेखरे—

> "ब्रह्मवासरगताब्दसंचयात् पूर्णखाभ्ररविभिर्विभाजितात् ।
> शेषके हरविशोधितेऽल्पके यत् तयोः खखयमैर्विभाजिते ॥
> लब्धरामशरघातलिप्तिकाः सूर्यशीतकरयोः परित्यजेत् ।
> चन्द्रवत् सुरगुरोर्विधूच्चतः शुक्रतो द्वितिथिताडितस्तथा ॥
> चन्द्रपातकुजमन्दगामिनां द्वीन्दुवेदगुणितं क्रमाद्धनम् ।
> ज्ञस्य च द्विशरसंगुणं जगुः कर्म दृग्गणितसाम्यकारकम्" ३ ॥

इत्यस्य ।

> "युगानां परिवर्त्तेन कालभेदोऽत्र केवलः" ।

इति सूर्यसिद्धान्तादिवचनैः स्वकाले यत्संस्कारेण गणितागतग्रह आकाशे प्रमाणीभूतो भवति तद्बीजमित्यभ्युपगमाद्बीजत्वम् । देशान्तरघट्यानयने ग्रहसंवादे हेतुत्वाच्च । अत एव बीजं स्वस्वकालेऽनियतस्थितिकं भिन्नमेवेत्युक्तप्रायमित्यलम् ॥ ८ ॥

अथाधिकारोपसंहारे श्लोकद्वयं युक्तियुक्तमाह ।

यद्ग्राम्यैरपि विस्तृतं बहुतरैस्तन्त्रं प्रकारान्तरै-
र्मन्दानन्दकरं तदत्र निपुणैः प्राज्ञैरवज्ञायते ।
आख्याते पृथुता सगोलगणिते व्यर्था हि तस्मान्मया
संक्षिप्तं न च विस्तृतं विरचितं रञ्ज्यो हि सर्वो जनः ॥९॥
रूपस्थानविभागतो द्विगुणच्छिद्भ्यां च संचारतो
नानाच्छेदविभेदभिन्नगुणकैर्नानाप्रकारेष्वपि ।
आद्याद्यत्र विचित्रभङ्गिभिरभिप्रेतप्रसिद्धौ क्रिया
लघ्वी वाऽथ समा तदेव सुधिया कार्यं प्रकारान्तरम् ॥१०॥

वा.भा. स्पष्टार्थमिदं श्लोकद्वयम् ॥ ९–१० ॥

मरीचिः–नन्वत्राहर्गणग्रहानयनप्रकाराणां पूर्वग्रन्थोक्तप्रकारेभ्योऽल्पत्वादनुपादेयोऽयम् । पूर्वग्रन्था एव चोपादेया अधिकविषयज्ञानकर्तृत्वादतः सिंहावलोकनन्यायेन सर्वोपादेयत्वयुक्त्या शार्दूलविक्रीडितेनाह यद्ग्राम्यैरिति । ग्राम्यैरचतुरैः पूर्वाचार्यैर्वटेश्वरश्रीपतिलल्लादिभिः । अतिशयेन बहवो बहुतरास्तैः प्रकारान्तरैरिष्टज्ञानोपयोगिकर्मान्तरैः । यत् तन्त्रं शास्त्रं कृतं तन्मन्दानन्दकरं ज्योतिःशास्त्रविचारे कुण्ठितबुद्धीनां संतोषकरम् । अत्र जगति । अत्र हेतुमाह निपुणैरिति । चतुरैः प्राज्ञैः सुबुद्धिभिः । अवज्ञायते तिरस्क्रियते । अत्रापि हेतुमाह आख्याते इति । हि यतः सगोलगणिते गोलस्वरूपनिरूपणयुतगणितनिरूपणग्रन्थे आख्याते कथिते पृथुता प्रकारान्तरैः शास्त्रविस्तृतता व्यर्था निष्प्रयोजका । गोलज्ञाने स्वरूपज्ञानद्वारा सकलतद्विषयस्य स्वतो ज्ञेयत्वात् । तथा च पूर्वग्रन्था एव प्राज्ञानामनुपादेया इति भावः । ननु बहुप्रकारान्तराभावेनायं मन्दानुपादेयोऽपि किञ्चित्प्रकारान्तरसत्त्वेन प्राज्ञानुपादेयश्चात आह तस्मादिति । यस्मात् मन्दसुबुद्ध्योः क्रमेण संक्षिप्तविस्तृतग्रन्थयोरनादरस्तस्मादित्यर्थः । मया भास्करशर्मणा चतुरेण । एतत् तन्त्रं संक्षिप्तं प्रकारान्तराभाववत्

विरचितं कृतं न विस्तृतम् । बहुप्रकारान्तरयुतमपि न कृतम् । तथा चोभयोरयमुपादेयः । मिश्ररीत्यैकपक्षाग्रहादिति भावः । ननु मन्दोपादेयपूर्वग्रन्थानां सत्त्वात् । प्रकारान्तराभावयुते रूपसंक्षिप्तमेव कुतो न कृतमिदम् । प्राज्ञानन्दकरत्वान्यथोक्तप्रकारान्तरे प्राज्ञानां नासिकामंकोचोत्पत्त्यापत्तेरत आह रञ्ज्य इति । हि यतः सर्वो मन्दसुबुद्धिमाधारणो जनः विपश्चिद्भिः रञ्ज्योऽनुरञ्जनीयः । प्रसन्नोऽनुरक्तः कार्य इत्यर्थः । तथा च प्राज्ञानां प्रकारान्तरे स्पष्टार्थद्योतकत्वज्ञानं स्यात् । पूर्वग्रन्थेऽपि यावत्प्रकारान्तराभावात् तदीयान्यप्रकारान्तरज्ञानं मन्दानां तथाऽत्रापि स्वल्पप्रकारान्तरैरप्यधिकप्रकारान्तरज्ञाने तेषां बुद्धिर्भवतीति भावः ॥९॥

ननु पूर्वग्रन्थेष्वनेकप्रकारान्तराणां सत्त्वात् कथं तदन्तर्गताः स्वल्पा अप्युक्तप्रकारा गृहीतास्तदन्ये च न गृहीता इत्यतः प्रकारान्तरकरणोपदेशव्याजेनोत्तरं शार्दूलविक्रीडितेनाह रूपस्थानविभागत इति । रूपगुणनं रूपविभागगुणनं स्थानविभागगुणनम् । एकशेषः । द्वन्द्वे एकत्वम् । एभ्यो लीलावत्युक्तेभ्यः ।

"गुण्यान्त्यमङ्कं गुणकेन हन्यादुत्सारितेनैवमुपान्तिमादीन् ।
गुण्यस्त्वधोऽधो गुणखण्डतुल्यस्तैः खण्डकैः संगुणितो युतो वा ॥
भक्तो गुणः शुद्ध्यति येन तेन लब्ध्या च गुण्यो गुणितः फलं वा ।
द्विधा भवेद्रूपविभाग एवं स्थानैः पृथग्वा गुणितः समेतः" ॥
इत्यनेन । दृढगुणच्छिद्भ्याम् ।
"परस्परं भाजितयोर्ययोर्यः शेषस्तयोः स्यादपवर्तनं सः ।
तेनापवर्त्तेन विभाजितौ यौ तौ भाज्यहारौ दृढसंज्ञकौ स्तः" ॥

इत्युक्तरीत्याऽपवर्तितगुणहराभ्यां संचारतो गुणसंचाराद्धरसंचाराच्च । अस्मिन् गुणे हरे वा क्रमेणायं गुणो हरो वा लभ्यते तदा कल्पिते हरे गुणे वा को गुणो हरो वेति संचारजगुणहराभ्यामित्यर्थः ।

"इष्टोनयुक्तेन गुणेन निघ्नोऽभीष्टघ्नगुण्यान्वितवर्जितो वा" ।

रतीष्टसंवारादित्यन्ये । नाना अनेके ये छेदविभेदाः । भिन्नगुणकैरनेकगुणकभेदैश्च "समेन केनाप्यपवर्त्य हारभाज्यौ भजेद्वा" इति ।
"छेदं लवं च परिवर्त्य हरस्य शेषः कार्योऽथ भागहरणे गुणनाविधिश्च" ।
"अंशाहतिश्छेदवधेन भक्ता लब्धं विभिन्ने गुणने फलं स्यात्" ।

इत्युक्तभेदैर्नानाप्रकारेषु कल्पितेषु अपिशब्दादाद्योक्तप्रकारेषु च । यत्र प्रकारे आद्यात् प्राचीनोक्तप्रकारात् । विचित्ररचनाभिर्बुद्धिजनिताभिरभिप्रेतप्रसिद्धौ अहर्गणादिपदार्थज्ञाननिमित्तम् । क्रिया गणितेतिकर्त्तव्यता लघ्वी लघुभूता । गौणमाह वेति । अथ वा प्रकारान्तरेण समा तुल्या क्रिया भवति तत् तादृशं प्रकारान्तरमभीष्टज्ञानोपजीव्योपायान्तरम् । एवकार आद्योक्तप्रकाराधिकगौरवप्रकारान्तरव्यवच्छेदार्थः । स्वग्रन्थे कार्यं निबन्धनीयम् । सुधियेति हेतुगर्भम् । यथा यथा लघुभूतप्रकारज्ञानं भवति तथा विचार्यमित्यर्थः । अल्पप्रयासेन कार्यसिद्धेर्महदुत्कर्षद्योतकत्वात् । तथा चाद्योक्तप्रकारेषु लघुभूताः प्रकारा अङ्गीकृताः कल्पिता अपि तल्लघुभूता उक्ता इति भावः । अत एव जगद्गुरुविष्णुदैवज्ञोक्तिः ।

'यद्यत् क्रियालाघवमत्र तन्त्रे तत्तद्गुरुत्वाय भवेत् कृतीनाम् ।
क्रियागुरुत्वाच्चितरां लघुत्वमहो विचित्रा गणितप्रसक्तिः"—इति॥१०॥

वा.भा.—इति श्रीभास्कराचार्यविरचिते सिद्धान्तशिरोमणिवासनाभाष्ये मिताक्षरे मध्यगतिसाधनाधिकारः प्रथमः ॥ १ ॥

मरीचिः—अयिमग्रन्थासंगतत्वं फक्किकया परिहरति इति श्रीभास्करीये सिद्धान्तशिरोमणौ मध्यमाधिकार इति । श्रीमद्भास्कराचार्यकृते सिद्धान्तशिरोमणिनाम्नि ग्रन्थे मध्यममानेनाधिकृतं गणितं ग्रहाणां संपूर्णं जातमित्यर्थः । तथा चायिमग्रन्थस्य मिश्रविषयत्वेन सङ्गतमेवेति भावः ।

दैवज्ञवर्यगणसन्ततसेव्यपार्श्व—
श्रीरङ्गनाथगणकात्मजनिर्मितेऽस्मिन् ।

मध्यः शिरोमणिमरीच्यभिधे समाप्ति
यातोऽधिकार इति खेचरनिर्णयोऽयम् ॥

इति श्रीसकलगणकसार्वभौमश्रीबल्लालदैवज्ञसूनुरङ्गनाथगणकात्मजमुनीश्वरापरनामकविश्वरूपनिर्मितसिद्धान्तशिरोमणिमरीचौ मध्यमाधिकारः संपूर्णः ।



महामण्डल शास्त्रप्रकाशक समिति यन्त्रेऽम्बिकावरण
चक्रवर्तिना मुद्रितम् ।